# पातञ्जल योगदर्शनम्



## तृतीय खण्ड

### तत्त्ववैशारदी-योगवार्त्तिकेति टीकाद्वयोपेतं व्यासभाष्यम्, हिन्दीव्याख्यया विभूषितम्

# विस्तृत विषयानुक्रमणी
## तृतीयो विभूतिपादः

# पातञ्जलयोगदर्शनम्

## तत्त्ववैशारदी-योगवार्त्तिकितिटीकाद्वयोपेतं व्यासभाष्यम्

( सपाठभेदबालप्रियाऽऽख्यहिन्दीव्याख्यया विभूषितम् )

## तृतीयो विभूतिपादः

### व्यासभाष्यम्

**उक्तानि पञ्च [1]बहिरङ्गाणि साधनानि। धारणा वक्तव्या।**

योग के पांच 'बहिरङ्ग' साधनों का निरूपण हो चुका है। सम्प्रति ('अन्तरङ्ग' साधनों में) 'धारणा' का लक्षण करना चाहिये–

### योगसूत्रम्

**[2]देशबन्धश्चित्तस्य धारणा॥१॥**

चित्त को (बाहरी या भीतरी किसी) प्रदेश में बाँधना (एकाग्र करना) 'धारणा' (कहलाता) है॥१॥

### व्यासभाष्यम्

**नाभिचक्रे, हृदयपुण्डरीके, [3]मूर्ध्नि ज्योतिषि, नासिकाग्रे, जिह्वाग्र इत्येवमादिषु देशेषु बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्ध इति धारणा ॥१॥**

नाभिचक्र, हृदयकमल, मस्तक पर स्थित प्रकाशपुञ्ज, नासिकाग्र, जिह्वाग्र इत्यादि (शरीरवर्ती) प्रदेशों में अथवा (सूर्य, चन्द्रादि) बाह्य विषय में चित्त को वृत्तिमात्र से बन्ध करना अर्थात् एकाग्र करना 'धारणा' है॥१॥

प्रथम तथा द्वितीय पाद से तृतीय पाद की अन्तःसंगति बैठाते हुए तत्त्ववैशारदीकार अष्टाङ्गयोग के द्विखण्ड को प्रतिपादित करते हुए अग्रिम सूत्र को प्रस्तुत करते हैं–

### तत्त्ववैशारदी

**प्रथमद्वितीयपादाभ्यां समाधिस्तत्साधनं चोक्तम्। तृतीयपादे तत्प्रवृत्त्यनुगुणाः श्रद्धोत्पादहेतवो विभूतयो वक्तव्याः। ताश्च संयमसाध्याः। संयमश्च धारणाध्यानसमाधिसमुदाय इति**

---

1. क ग घ ध न प फ म य र–**बहिरङ्गाणि**, ख च छ ज झ त थ द ब भ–**बहिरङ्ग॰**।
2. **देव॰**–इति पाठान्तरम्।
3. क ख ग घ च छ ज झ थ द ध न प फ भ म य र–**मूर्ध्नि** त ब–**मूर्ध॰**।

**विभूतिसाधनतया, पञ्चभ्यश्च योगाङ्गेभ्यो बहिरङ्गेभ्योऽस्याङ्गत्रयस्यान्तरङ्गतया विशेषज्ञापनार्थमत्र त्रयस्योपन्यासः। तत्रापि च धारणाध्यानसमाधीनां कार्यकारणभावेन नियत[1]पौर्वापर्यत्वात्तदनुरोधेनोपन्यासक्रम इति प्रथमं धारणा लक्षणीयेत्याह—उक्तानीति। देशबन्धश्चित्तस्य धारणा। [2]बन्धः सम्बन्धः।**

प्रथम तथा द्वितीय पाद के द्वारा समाधि और उसके साधन का निरूपण किया गया। तृतीय पाद में योग के साधन की प्रवृत्ति के अनुरूप श्रद्धा-उत्पादन करने वाली विभूतियाँ कही जानी हैं। ये वक्ष्यमाण विभूतियाँ संयमसाध्य हैं। विभूति के साधन रूप में धारणा, ध्यान तथा समाधि का समुच्चय '**संयम**' पदवाच्य है। अर्थात् धारणादित्रय की समवेत संज्ञा '**संयम**' **है**। योग के पाँच '**बहिरंग**' साधनों (यम, नियम, आसन, प्राणायाम तथा प्रत्याहार) की अपेक्षा प्रस्तूयमान अङ्गत्रय (धारणा, ध्यान तथा समाधि) की विभूति के साधन (उपाय) रूप से '**अन्तरङ्गता**' होने से इस तृतीय विभूतिपाद में अङ्गत्रय का उल्लेख उसके वैशिष्ट्य को प्रतिपादित करने के लिये किया गया है। 'किञ्च' धारणा, ध्यान तथा समाधि इन तीन में भी कार्यकारणभाव से सुनिश्चित पौर्वापर्य है—इसी नियम से इनके प्रस्तुतीकरण के क्रम में प्रथमतः '**धारणा**' का लक्षण किया जाना चाहिये, ऐसा भाष्यकार कहते हैं—'**उक्तानीति**।' तदर्थ सूत्र है—'**देशेति**।' यहाँ '**बन्ध**' शब्द का अर्थ है—'**सम्बन्ध**'।

### तत्त्ववैशारदी

आध्यात्मिकदेशमाह—**नाभिचक्र इति। आदिशब्देन ताल्वादयो ग्राह्याः। बाह्यदेशमाह—बाह्य इति। बाह्ये च न स्वरूपेण चित्तस्य संबन्धः संभवतीत्युक्तं वृत्तिमात्रेण ज्ञानमात्रेणेत्यर्थः।**

भाष्यकार धारणा के आध्यात्मिक (आन्तरिक) देश को बताते हैं—'**नाभिचक्र इति**।' भाष्यगत '**आदि**' शब्द से ताल्वादि आध्यात्मिक देश का ग्रहण होता है। भाष्यकार धारणा के बाह्य प्रदेश को कहते हैं—'**बाह्य इति**।' चित्त का बाह्य (इसी प्रकार आन्तर) देश के साथ स्वरूपतः सम्बन्ध नहीं हो सकता है। उसका देश के साथ होने वाला बन्धरूप सम्बन्ध '**वृत्तिरूपात्मक**' अर्थात् ज्ञानरूपात्मक है।

**बालप्रिया—**

'**ताल्वादयो ग्राह्या**':—वाचस्पति मिश्र ने '**आदि**' पद के द्वारा ताल्वादि का ग्रहण मैत्र्युपनिषद् के अनुसार किया है। मैत्र्युपनिषद् का वाक्य है—'**अतः पराऽस्य धारणा**

---

1. क ख ग घ च छ ज झ थ द ध न—**पौर्वापर्यत्वात्**, त—**पौर्वापर्यात्**।
2. क ख ग थ द ध—**बन्धः सम्बन्धः** (**ग्राह्याः**—पश्चात्) उपलभ्यते, घ च छ ज झ त न—**बन्धः सम्बन्धः** (**धारणा**—पश्चात्) उ[illegible]यते।

**तालुरसनाग्रनिपीडनात्**।' इस वाक्य में 'तालु' को धारणा का विषय बताया गया है। किन्तु गरुडपुराण में 'धारणा' के निर्दिष्ट देशों में 'तालु' को नहीं लिया गया है। गरुडपुराण का वाक्य है—**प्राङ्नाभ्यां हृदये वाऽथ तृतीये च तथोरसि। कण्ठे मुखे नासिकाग्रे भ्रूमध्यमूर्द्धसु॥ किञ्चित्तस्मात्परस्मिंश्च धारणा दश कीर्त्तिताः**।

तत्त्ववैशारदीकार '**धारणा**' के स्वरूप की प्रामाणिकता को सिद्ध करने के लिये विष्णुपुराण से अनेक श्लोकों को उद्धृत करते हैं—

**तत्त्ववैशारदी**

**अत्रापि पुराणम्—**

**प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्।**
**वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रये॥**

**शुभाश्रयाः बाह्या हिरण्यगर्भवासवप्रजापतिप्रभृतयः। इदं च तत्रोक्तम्—**

**मूर्तं भगवतो रूपं सर्वोपाश्रयनिःस्पृहम्।**
**एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते॥**
**[1]तच्च मूर्तं हरे रूपं यद्विचिन्त्यं नराधिप।**
**तच्छ्रूयतामनाधारा धारणा नोपपद्यते॥**
**प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम्।**
**सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम्॥**
**समकर्णान्तविन्यस्तचारुकुण्डलभूषणम्।**
**कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम्॥**
**वलीविभङ्गिना मग्ननाभिना चोदरेण च**
**प्रलम्बाष्टभुजं विष्णुमथ वापि चतुर्भुजम्॥**
**समस्थितोरुजङ्घं च स्वस्तिकाङ्घ्रिकराम्बुजम्।**
**चिन्तयेद् ब्रह्मभूते तं पीतनिर्मलवाससम्॥**
**किरीटचारुकेयूरकटकादिविभूषितम्॥**
**शार्ङ्गचक्रगदाखड्गशङ्खाक्षवलयान्वितम्॥**
**चिन्तयेत्तन्मयो योगी समाधायात्ममानसम्।**
**तावद्यावद् दृढीभूता तत्रैव नृप धारणा॥**
**व्रजतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः।**
**नापयाति यदा चित्तं मन्येत तां तदा ॥ इति॥१॥**

---

1. क ख ग घ च छ ज झ द न—तत्, त थ ध—यत्।

इसमें विष्णुपुराण का वाक्य प्रमाण है—'**प्राणायामेन...शुभाश्रये**' (६/७/४५) अर्थात् 'इस प्रकार प्राणायाम से प्राणवायु तथा प्रत्याहार से इन्द्रियों को वश में कर चित्त को शुभाश्रय में स्थित करना चाहिये।' हिरण्यगर्भ, वासव (इन्द्र) और प्रजापति प्रभृति देवता बाह्य शुभाश्रय हैं। विष्णुपुराण में आगे कहा गया है—'**मूर्त्तं भगवतो...तां तदा**' (६/७/७८) अर्थात् 'भगवान् के इस मूर्त्तरूप से चित्त अन्य आश्रयों से हट जाता है। इस प्रकार चित्त के उन्हीं में स्थिर होने को 'धारणा' कहते हैं। हे नरेन्द्र! विना किसी आधार के धारणा नहीं हो सकती है। इसलिये जो भगवान् प्रसन्न मुख, सुन्दर पद्मदल जैसे लोचन वाले, श्रेष्ठ कपोल, विशाल ललाट, कानों में कुण्डल धारण किये हुए शंख जैसी ग्रीवा वाले, विस्तृत एवं श्रीवत्स चिह्नयुक्त वक्षस्थल वाले, तरङ्गाकार त्रिवली और गंभीर नाभि वाले, उदर से सुशोभित, आठ लम्बी-लम्बी भुजाओं वाले, जिनके जंघा और उरु कमानरूप से स्थित हैं, सुघड़ और मनोहर चरणकमलों में बैठे हुए उन श्रीविष्णु का ध्यान करना चाहिये। हे राजन्। किरीट, हार, केयूर, कटक आदि धारण किये शार्ङ्गधनु, शंख, चक्र, गदा, खड्ग और अक्षमाला से युक्त हैं, ऐसे भगवान् के दिव्यरूप को एकाग्र मन से धारण करके दृढ़ न होने तक चिन्तन करते रहना चाहिये। जब चलते, उठते, बैठते या अन्य कोई कार्य करने में भी वह रूप अपने चित्त से विस्मृत न हो, तब सिद्धि की प्राप्ति हुई समझो॥१॥

## योगवार्त्तिकम्

**योगाङ्गेषु मध्ये कियन्ति पूर्वपादे प्रोक्तानि कियन्ति चात्र पाद इत्यत्र नियामकं वदन्नेव क्रमप्राप्तं धारणासूत्रमवतारयति—उक्तानीति। बहिरङ्गान्तरङ्गत्वे अपि पादभेदेन निरूपणे नियामके इत्यर्थः। देशबन्धश्चित्तस्य धारणा। यत्र देशे ध्येयं चिन्तनीयं तत्र ध्यानाधार-देश[1]विषये चित्तस्य स्थापनं तदैकाग्र्यं धारणेत्यर्थः। तदेतद्व्याचष्टे—नाभीति। मूर्ध्नि मूर्द्धस्थे ज्योतिषि। आदिशब्देन गारुडाद्युक्तदेशान्तराणि ग्राह्याणि। यथा गारुडे—**

प्राङ् नाभ्यां हृदये वाऽथ तृतीये च तथोरसि।
कण्ठे मुखे नासिकाऽग्रे नेत्रभ्रूमध्यमूर्द्धसु॥
किंचित्तस्मात्परस्मिंश्च धारणा दश कीर्त्तिताः।

**मुखे जिह्वाऽग्रे। किंचित्तस्मात्परस्मिन्निति=मूर्ध्नि उपरि द्वादशाङ्गुलपरिमिते देशे लिङ्ग-शरीरस्य सप्राणस्य तावत्पर्यन्तं प्रदीपशिखावदवस्थानादवहितैस्तावत्पर्यन्तमेव लिङ्गशरीरानुग-तोष्मोपलभ्यते, वाक्यानामुपलम्भाच्च। तदुक्तं कौर्मे—**

शिखाऽग्रे द्वादशाङ्गुल्ये कल्पयित्वाऽथ पङ्कजम्।

---

1. क ग घ च छ—**विषये**, ख—**विशेषे**।

**इत्यादिनेति। एतानि च नाभ्यादीनि जीवेश्वरयोर्मुख्यस्थानान्येव राज्ञः सिंहासनवत्, जीवेश्वरव्यञ्जकस्य लिङ्गशरीरस्य मुख्यस्थानत्वात्। अत एतानि धारणायाः प्रकृष्टदेशा उक्ताः।**

योग के यमादि आठ अंगों में से कितने अंग द्वितीय पाद में प्रतिपादित हो चुके हैं और कितने प्रकृत पाद में प्रतिपादित किये जाने हैं इस विषय के विभाजक तथ्य को बताते हुए ही भाष्यकार क्रमप्राप्त '**धारणा**' के सूत्र को अवतरित करते हैं– '**उक्तानीति।**' यमादि योगाङ्गों का पादभेद से निरूपण होने में अङ्गों का '**बहिरङ्गत्त्व**' और '**अन्तरङ्गत्त्व**' नियामक (मर्यादक) है, यह भाष्यकार के कथन का अभिप्राय है। सूत्र है–'**देशेति।**' जिस देश में ध्येय पदार्थ का चिन्तन किया जाता है, उस ध्यान (चिन्तन) के आधारभूत देशविशेष में चित्त को स्थापित कर एकाग्र बनाना '**धारणा**' है। भाष्यकार सूत्र की व्याख्या करते हैं–'**नाभीति।**' '**मूर्ध्नि**' शब्द से 'मूर्द्धस्थ ज्योति' में धारणा अभिप्रेत है। '**आदि**' शब्द से गरुडादि पुराणों में प्रतिपादित अन्य देश ग्राह्य हैं। जैसा कि गरुडपुराण में कहा गया है–**प्राङ्नाभ्यां...दश कीर्त्तिताः** (१/२१८/२१-२२) अर्थात् 'नाभि, हृदय, तृतीय स्थान पर वक्षस्थल, कण्ठ, मुख, नासिका के अग्रभाग, नेत्र, भ्रू के मध्यभाग, मूर्धा और इनसे भिन्न किसी दूसरे प्रदेश में साधने वाली '**धारणा**' दस प्रकार की कही गई है।'

यहाँ '**मुख**' शब्द का अर्थ जिह्वा का अग्रभाग है। '**किंचित्तस्मात्परस्मिन्**' का अर्थ है–'मूर्द्धा से ऊपर द्वादश अंगुल परिमित प्रदेशपर्यन्त प्राणसहित लिङ्गशरीर दीप-शिखा की भाँति अवस्थित रहता है, क्योंकि योगियों को द्वादश अंगुल परिमित प्रदेशपर्यन्त लिङ्गशरीरनिष्ठ ऊष्मा (गर्मी) की अनुभूति होती है और आगमप्रमाण से भी ऐसा सिद्ध होता है। जैसा कि कूर्मपुराण में कहा गया है–'**शिखाऽग्रे...पङ्कजम्**' अर्थात् 'शिखा के अग्रभाग में द्वादश अंगुल वाले एक पङ्कज की कल्पना करे (जो कि धर्म के केन्द्र से समुद्भूत हुआ है और ज्ञान की नाल से परम शोभा वाला है')। किञ्च ये नाभ्यादि प्रदेश जीव और ईश्वर के रहने के मुख्य स्थान उसी प्रकार हैं जिस प्रकार सिंहासन राजा का मुख्य स्थान होता है। क्योंकि यहाँ जीव और ईश्वर की अभिव्यक्ति होती है। अतः नाभ्यादि धारणा के प्रकृष्ट (मुख्यतम) देश कहे गये हैं।

सम्प्रति '**धारणा**' के ब्राह्य देशों पर विचार किया जा रहा है–

### योगवार्त्तिकम्

**आध्यात्मिकान् ध्यानदेशानुक्त्वा बाह्यानपि संक्षेपत आह–बाह्ये वा विषय इति। चन्द्रसूर्याग्न्यादावीश्वरदेवताऽऽदिध्यानदेश इत्यर्थः। वृत्तिमात्रेणेति। वृत्तिमात्रेण न तु ध्येयकल्पनयेत्यर्थः। तेन ध्यानादिव्यावृत्तिः। तदुक्तमीश्वरगीतायाम्–**

**हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वतमस्तके।**
**एवमादिप्रदेशेषु धारणा चित्तबन्धनम्॥**
**देशावस्थितमा[1]लक्ष्य बुद्धेर्या वृत्तिसन्ततिः।**
**वृत्त्यन्तरैरसंस्पृष्टा तद्ध्यानं सूरयो विदुः॥**
**एकाकारसमाधिः स्याद्देशालम्बनवर्जितः।**
**प्रत्ययो ह्यर्थमात्रेण योगसाधनमुत्तमम् ॥इति।**

इस प्रकार धारणा के आध्यात्मिक अर्थात् आन्तरिक देशों को बतलाकर सम्प्रति, भाष्यकार उसके बाह्य देशों को भी संक्षेपतः कहते हैं–'**बाह्ये वा विषय इति।**' चन्द्र, सूर्य, अग्नि आदि (बाह्यदेशरूप विषय) ईश्वर, देवतादि के ध्यान के देश हैं। वार्त्तिककार '**चित्तबन्ध**' का स्वरूप स्पष्ट करने के लिये भाष्य को उठाते हैं– '**वृत्तिमात्रेणेति।**' इन आभ्यन्तर तथा बाह्य देशों में चित्त को वृत्तिमात्र से न कि ध्येयादि की कल्पना से स्थापित किया जाता है। इससे धारणा की ध्यानादि से व्यावृत्ति हो जाती है। जैसा कि ईश्वरगीता में कहा गया है–'**हृत्पुण्डरीके... योगसाधनमुत्तमम्**' (११/२९) अर्थात् 'हृदयकमल, नाभि, मूर्द्धा, ललाट आदि प्रदेशों में निष्पादित चित्तबन्ध को '**धारणा**' कहते हैं। इन्हीं नाभि आदि देशों में ईश्वरादि ध्येय को लक्षित कर चित्त का होने वाला जो वृत्त्यन्तरशून्यसदृश ध्येयात्मक वृत्तिप्रवाह है, उसी को विद्वानों ने '**ध्यान**' कहा है। इन्हीं देशादि आलम्बन से रहित चित्त को ध्येयाकार '**समाधि**' होती है और यह केवल पदार्थमात्रविषयिणी होती है। अर्थात् शब्द और ज्ञान इसमें भासित नहीं होते हैं। यह 'समाधि' योगप्राप्ति का सर्वोत्कृष्ट साधन है।'

वार्त्तिककार धारणाविषयक वैयासिक वाक्य को उपसंहृत करते हुए कहते हैं–

### योगवार्त्तिकम्

**बन्ध इतीत्यन्तेन देशबन्धशब्दं व्याख्याय सूत्रवाक्यार्थमुपसंहरति–बन्ध इति। ईदृशो बन्धो धारणेत्यर्थः। इदं च धारणालक्षणं प्राथमिकपरिच्छिन्नयोगाभिप्रायेण सूचितम्, यत्र प्रथमत एवेश्वरानुग्रहाद् अपरिच्छिन्नतया जीवब्रह्मयोगो भवति तत्र देशालम्बनधारणाऽनुपयोगात्। अतो धारणाया अन्यदपि लक्षणं गारुडादावप्युक्तम्। यथा गारुडे–**

**प्राणायामैर्द्वादशभिर्यावत्कालः कृतो भवेत्।**
**स तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत्॥**

**इत्यादि। एतदेव तु धारणासामान्यलक्षणम्, अन्यथा क्षणमात्रेणापि धारणाऽऽपत्तेः। अतः सूत्रोक्तं विशेषलक्षणमपि प्राणायामद्वादशकालावच्छिन्नत्वेन विशेषणीयमिति॥१॥**

---

1. क ग घ च छ–आलक्ष्य, ख–आलम्ब्य।

**'देशबन्ध'** शब्द की व्याख्या करने के लिये भाष्यकार **'बन्ध इति'** यहाँ तक के भाष्य से सूत्रवाक्य के अर्थ को उपसंहृत करते हैं–**'बन्ध इति।'** उपरिवर्णित बन्ध ही **'धारणा'** है। धारणा का यह लक्षण प्राथमिक परिच्छिन्न योगाभिप्राय (योगानुष्ठान में प्रवृत्त प्राथमिक योगी के धारणाविषयक अभ्यास के अभिप्राय) से सूचित (अभिहित) किया गया है, क्योंकि जहाँ ईश्वर की कृपा से ही सर्वप्रथम व्यापक स्तर पर अर्थात् अपरिच्छिन्नरूप से जीव और ब्रह्म का योग हो जाता है अर्थात् साधक का चित्त अपरिच्छिन्न ईश्वर में लवलीन हो चुका रहता है, वहाँ **'देश'** को आलम्बन बनाकर की जाने वाली धारणा अनुपयोगी है। अतः गरुडादि पुराणों में धारणा का अन्य लक्षण भी किया गया है। यथा गरुडपुराण में–**'प्राणायामैः..धारयेत्'** (१/२२७/ २४) अर्थात् 'बारह बार प्राणायाम करने में जितना समय व्यतीत होता है उतने समय तक मन को ब्रह्म में स्थापित करे अर्थात् धारणा करे।' यही धारणा-सामान्य का लक्षण है। अन्यथा क्षणपर्यन्त होने वाले **'चित्तबन्ध'** को भी धारणा कहने का प्रसंग प्राप्त होगा। अतः सूत्र द्वारा प्रतिपादित धारणाविषयक लक्षणविशेष को भी **'प्राणायामद्वादशकालावच्छिन्न'** (बारह बार अनुष्ठित प्राणायाम में व्यतीत होने वाले काल की न्यूनतम अवधि से परिच्छिन्न) इस विशेषण से युक्त करना चाहिये॥१॥

**बालप्रिया–**

**'प्राणायामद्वादशकालावच्छिन्नत्वेन विशेषणीयम्'**–अभिप्राय यह है कि द्वादश-प्राणायाम के निश्चित समय तक की जाने वाली चित्तस्थिति ही **'धारणा'** है। इससे कम समय के लिये सम्पादित चित्त का देश-बन्ध धारणा नहीं कहा जाता है। इस सीमित काल की भी उत्तरोत्तर वृद्धि होनी चाहिये, जिससे **'धारणा'** परिपुष्ट होकर **'ध्यान'** की सुदृढ साधिका बन सके॥१॥

### योगसूत्रम्

## [1]तत्र प्रत्ययैकतानता ध्यानम् ॥२॥

## उस विषय में ज्ञान की एकतानता ही 'ध्यान' है॥२॥

### व्यासभाष्यम्

**तस्मिन्देशे ध्येयालम्बनस्य प्रत्ययस्यै[2]कतानता सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्॥२॥**

---

1. तत्र–नोपलभ्यते।
2. क ख ग घ च छ ज थ द ध न प फ ब भ म य र–एकतानता सदृशः, झ त–एकतानतासदृशप्रत्यय०।

उस (नाभिचक्रादि) देशरूप विषय में ध्येयरूप आलम्बन वाले प्रत्यय की एकतानता अर्थात् विजातीय वृत्तियों से शून्य सजातीय वृत्तियों की ही होने वाली प्रवहणशीलता को 'ध्यान' कहते हैं॥२॥

**तत्त्ववैशारदी**

**धारणासाध्यं ध्यानं लक्षयति—तत्र प्रत्ययैकतानता ध्यानम्। एकतानतैकाग्रता। सुगमं भाष्यम्।** अत्रापि **पुराणम्—**

**तद्रूपप्रत्ययैकाग्र्यसंततिश्चान्यनिःस्पृहा।**
**तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप इति ॥२॥**

सूत्रकार धारणासाध्य (धारणा से सिद्ध होने वाले) '**ध्यान**' का लक्षण करते हैं—'**तत्रेति**।' सूत्र में प्रयुक्त '**एकतानता**' पद का अर्थ है—एकाग्रता। अर्थात् एकाग्रभूमिक चित्त के सदृश ध्येयाकारवृत्तिप्रवाह को '**एकतानता**' कहते हैं। भाष्य सरल है। सुगम भाष्यार्थ पीछे द्रष्टव्य है। '**ध्यान**' के स्वरूप के विषय में भी पुराण का वचन (प्रमाण) है—'**तद्रूप...नृप**' (वि. पु. ६/७/९०) अर्थात् 'हे राजन्! जिसमें परमेश्वर के रूप की प्रतीति हो, उस निःस्पृह (विषयान्तर की स्पृहा से रहित) एवं अनवरत धारा को ही 'ध्यान' कहते हैं, जो अपने से पूर्ववर्त्ती छह अङ्गों द्वारा निष्पन्न होता है'॥२॥

**बालप्रिया—**

'**एकतानता**'—यद्यपि सूत्रकार ने कालविशेष को न लेते हुए ही धारणादि का लक्षण किया है तथापि क्षणमात्र के लिये होने वाली एकतानता को ध्यान नहीं समझना चाहिये। धारणादि के न्यूनतम काल का संकेत स्कन्दपुराण तथा गरुडपुराण में उपलब्ध होता है। वहाँ पञ्चघटिकावच्छिन्न एकाग्रता को '**धारणा**', षष्ठिघटिकावच्छिन्न चित्तैकाग्रता को '**ध्यान**' तथा बारह दिन की एकाग्रमनःस्थिति को '**समाधि**' बताया गया है। स्कन्दपुराण का वचन है—

**'धारणा पञ्चनाडीका ध्यानं स्यात् षडिकम्।**
**दिनद्वादशकेनैव समाधिरभिधीयते॥'**

गरुडपुराण का वचन है—

**'प्राणायामैर्द्वादशभिर्यावत्कालः कृतो भवेत।**
**स तावत्कालपर्यन्तं मनो ब्रह्मणि धारयेत्॥**
**तस्यैव ब्रह्मणि प्रोक्तं ध्यानं द्वादश धारणा।**
**ध्यानद्वादशपर्यन्तं मनो ब्रह्मणि योजयेत्॥**
**तिष्ठेत्तल्लयतो युक्तः समाधिः सोऽभिधीयते।'**

निष्कर्षतः धारणादि को तत्तत्कालावच्छिन्न समझना चाहिये। अतः 'एकतानता' पद को **'षष्ठिघटिकावच्छिन्ना'** विशेषण प्रदान करना पुराणसम्मत है॥२॥

### योगवार्त्तिकम्

**धारणासाध्यं ध्यानमा[1]ह—तत्र प्रत्ययैकतानता ध्यानम्। भाष्यं सुगमम्। इदमपि ध्यानलक्षणं प्राथमिकौत्सर्गिकध्यानाभिप्रायेण, सर्वत्र ध्याने देशानियमात्। अतोऽस्य गारुडे लक्षणान्तरमुक्तम्—**

**तस्यैव ब्रह्मणि प्रोक्तं ध्यानं द्वादशधारणा॥**

**इत्यनेन। तस्यैव द्वादशप्राणायामकालेन धारितचित्तस्य द्वादशधारणाकालावच्छिन्नं चिन्तनं ध्यानं प्रोक्तमित्यर्थः। अनेन च पूर्ववत्सूत्रोक्तं विशेषलक्षणं विशेषणीयम्॥२॥**

सूत्रकार **'धारणा'** से सिद्ध होने वाले **'ध्यान'** का स्वरूप बताते हैं—**तत्रेति**।' ध्यान-विषयक भाष्यार्थ सुकर है। ध्यान का यह लक्षण भी **'प्राथमिक ध्यान'** के अभिप्राय से कहा गया है, क्योंकि ध्यान में सर्वत्र देश का प्रतिबन्ध अर्थात् नियम नहीं रहता है। अतः गरुडपुराण में ध्यान का अन्य लक्षण भी किया गया है—**'तस्यैव...द्वादश-धारणा'** अर्थात् 'द्वादशधारणापर्यन्त मन को ब्रह्म में लगाये रखने को 'ध्यान' कहते हैं।' भाव यह है कि द्वादशप्राणायाम की अवधिपर्यन्त 'धारणा' किये हुए चित्त का ही द्वादशधारणा के काल से मर्यादित (परिच्छिन्न, सीमित) होकर चिन्तन करना 'ध्यान' है। अर्थात् द्वादशधारणापरिच्छिन्न काल **'ध्यान'** की न्यूनतम अवधि है। अर्थात् पूर्वकथित काल से मर्यादित होकर बारह बार की गई 'धारणा' 'ध्यान' योगाङ्ग के नाम से अभिहित है। अतः **'द्वादशधारणाकालावच्छिन्न'** इतने अंश को **'ध्यान'** के सूत्रोक्त लक्षणविशेष में विशेषणरूप से संयोजित करना चाहिये॥२॥

अवतरणिका के विना अगला सूत्र उपस्थित हो रहा है—

### योगसूत्रम्

## तदे[2]वार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः॥३॥

## अर्थमात्र (ध्येयमात्र) को निर्भासित करने वाला अपने (ज्ञानात्मक) रूप से भी रहित सदृश ध्यान ही 'समाधि' है॥३॥

### व्यासभाष्यम्

[3]**ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति**

---

1. क घ च छ—**आह**, ख ग—**लक्षयति**।
2. **इव, इति**—इति पाठान्तरे।
3. अ. द—**इदमत्र बोध्यम्—ध्यातृध्येयध्यानकलनावत् ध्यानं तद्रहितं समाधिरिति ध्यानसमाध्योर्विभागः। अस्य च समाधिरूपस्याङ्गस्याङ्गिसंप्रयोगादयं भेदो यदत्र चिन्तारूपतया निःशेषतो ध्येयस्य स्वरूपं न**

**ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते॥३॥**

जब ध्यान केवल ध्येयाकाररूप से भासित होता हुआ ध्येय के स्वरूप को धारण करने से अपने ज्ञानात्मक स्वभाव से शून्य के समान हो जाता है, तब उस ध्यान को ही 'समाधि' कहते हैं॥३॥

**तत्त्ववैशारदी**

**ध्यानसाध्यं समाधिं लक्षयति–तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। व्याचष्टे–ध्यानमेवेति। ध्येयाकारनिर्भासमिति। ध्येयाकारस्यैव निर्भासो न ध्यानाकारस्येति। अत एवाह–शून्यमिति। ननु शून्यं चेत्कथं ध्येयं प्रकाशेतेत्यत आह–इवेति। अत्रैव हेतुमाह–ध्येयस्वभावावेशादिति। अत्रापि पुराणम्–**

**तस्यैव कल्पना[1]हीनं स्वरूपग्रहणं हि यत्।**
**मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते॥**

**इति। ध्येयाद्ध्यानस्य भेदः कल्पना, तद्धीनमित्यर्थः। अष्टाङ्गयोगमुक्त्वा खाण्डिक्याय केशिध्वज उपसंजहार–**

**क्षेत्रज्ञः करणी ज्ञानं करणं तदचेतनम्।**
**निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तते॥ इति ॥३॥**

सूत्रकार ध्यानसाध्य (ध्यान के फल) '**समाधि**' का लक्षण करते हैं–'**तदिति**।' भाष्यकार सूत्र की व्याख्या करते हैं–'**ध्यानमेवेति**।' '**ध्येयाकारनिर्भासमिति**।' समाधि में ध्येयाकार का ही निर्भास होता है, ध्यानाकार का नहीं–यह बतलाने के लिये भाष्यकार ने (सूत्रगत '**अर्थमात्रनिर्भासम्**' पद के व्याख्यानार्थ) '**ध्येयाकारनिर्भासम्**' पद का प्रयोग किया है। इसीलिये सूत्र में आगे कहा गया है–'**शून्यमिति**।' अर्थात् समाधि में ध्येय चित्तवृत्त्यात्मक ध्यानस्वरूप से शून्य होता है।

**शङ्का**–यदि समाधिकाल में ध्यान अर्थात् ज्ञान की शून्यता रहती है अर्थात् ज्ञान विद्यमान नहीं रहता है, तो समाधि में '**ध्येय**' पदार्थ का प्रकाश कौन करेगा? अर्थात् किस प्रकार ध्येय पदार्थ का ज्ञान होगा?

**समाधान**–इसीलिये (सूत्र में) कहा गया है–'**इवेति**।' समाधिकाल में विद्यमान रहता हुआ भी '**ध्यान**' प्रतीत न होने के कारण '**स्वरूपशून्य**' के समान हो जाता है। भाष्यकार ध्यान की स्वरूपशून्यसदृश स्थिति के लिये हेतु बताते हैं–'**ध्येयस्वभावावेशादिति**।'

---

**भासत इति। तथा च साक्षात्कारयुक्तैकाग्र्यकाले संप्रज्ञातयोगः। अन्यदा ते समाधिमात्रमिति विभागः** (**ध्यानं**–पूर्वम्) उपलभ्यते, क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र–**इदं**...**समाधिः** नोपलभ्यते।

आ. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**ध्यानमेव**, ब–**तदेव ध्यानम्**।

1. क ख ग घ च छ थ द ध न–**हीनम्**, ज झ त–**हीन०**।

क्योंकि ध्येयस्वरूपाकारता को ध्यान प्राप्त हो जाता है, इसलिये उसके अपने रूप की प्रतीति नहीं होती है। अर्थात् ध्येयार्थ के रूप में ही निर्भासित अपने ज्ञानात्मक रूप से रहित होकर प्रतीयमान ध्यान ही **'समाधि'** संज्ञा को प्राप्त करता है। इस विषय में विष्णुपुराण का वाक्य प्रमाण है–**'तस्यैव...सोऽभिधीयते'**–(६/७/९२) अर्थात् 'ध्यान द्वारा सिद्धि के योग्य उस ध्येय का जो स्वरूप मन के द्वारा ग्रहण होता है, वही समाधि कहा जाता है।'

ध्यान से समाधि में यही अन्तर है कि ध्यानकाल में ध्येय से ध्यान की भेद-कल्पना विद्यमान रहती है अर्थात् ध्याता को ध्येय पदार्थ से अतिरिक्त ध्यानरूप वृत्ति (ज्ञान) का बोध रहता है। अर्थात् ध्याता-ध्यान-ध्येय का भेदज्ञान रहता है, जब कि समाधि में तथाकथित भेद-कल्पना (ध्येय से भिन्न ध्यान का अस्तित्वबोध) समाप्त हो जाता है। अर्थात् ध्यान अभ्यासवश अपनी ध्यानाकारता को त्यागकर केवल ध्येयरूप से स्थिर होता हुआ प्रतिभासित होता है। इस प्रकार खाण्डिक्य के प्रति अष्टाङ्गयोग का उपदेश कर केशिध्वज विषय को उपसंहृत करते हुए कहते हैं–**'क्षेत्रज्ञः...निवर्तते'** (वि. पु. ६/७/९४) अर्थात् 'मोक्षलाभ में क्षेत्रज्ञ कर्त्ता और ज्ञान कारण हैं। मोक्षरूपी कार्य को सिद्ध करने से धन्य हुआ वह विज्ञान-निवृत्ति को प्राप्त होता है'॥३॥

## योगवार्त्तिकम्

**ध्यानसाध्यं समाधिं लक्षयति–तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। मात्रपदस्यार्थः स्वरूपशून्यमिवेत्यनेन स्वयं [1]विवृतः, तदेतद्व्याचष्टे–ध्यानमेवेति। [2]यदा तदेव ध्यानं ध्येयस्याकारेणैव साक्षिणि निर्भासते न तु प्रत्ययाकारनिर्भासम्, चित्तस्य ध्येयस्व-रूपावेशेनाहमिदं चिन्तयामीत्येवं प्रत्ययाकारवृत्त्यन्तरानुदयात् तदा ध्यानमेव समाधिरुच्यत इत्यर्थः। ध्यानस्वरूपस्य वस्तुतः सत्त्वादिवशब्दप्रयोगः, तथा ध्यातृध्येयध्यान[3]कलनावद् ध्यानं तद्रहितं च समाधिरिति ध्यानसमाध्योर्विभागः। इदं च समाधिलक्षणं पूर्वसूत्रोक्तध्यानविशेष-तया देशघटितत्वेनापरिच्छिन्नसमाध्यव्यापकम्। अतोऽर्थमात्रावभासनं चिन्तनमित्येव समाधि-सामान्यलक्षणम्, [4]उदाहृतेश्वरगीतावाक्ये तल्लक्षणसिद्धेः। अथ वा गारुडोक्तं यथा–**

**ध्यानं द्वादशपर्यन्तं मनो ब्रह्मणि योजयेत्।**
**तिष्ठेत्तल्लयतो युक्तः समाधिः सोऽभिधीयते ॥ इति।**

---

1. क ग घ च छ–**विवृतः**, ख–**निवृत्तः**।
2. क ग घ च–**तदा**, ख छ–**यदा**।
3. क ग घ च छ–**कलनावत्**, ख–**विभागकल्पना**।
4. क ग घ च छ–**उदाहृतेश्वरगीतावाक्ये तल्लक्षणसिद्धेः** उपलभ्यते, ख–**उदाहृत...सिद्धेः** नोपलभ्यते।

**अत्रापि सूत्रोक्तं विशेषलक्षणं ध्यानद्वादशगुणितकालावच्छिन्नत्वेन [1]विशेषणीयमिति।**

सूत्रकार ध्यानसाध्य समाधि का लक्षण करते हैं–'**तदिति**।' सूत्रकार ने '**स्वरूप-शून्यम्**' पद के द्वारा सूत्रगत '**मात्र**' शब्द का अर्थ भी स्वतः स्पष्ट किया है। भाष्यकार उसी ध्यान का विश्लेषण करते हैं–'**ध्यानमेवेति**।' जब ध्यान ध्येय के आकार से ही साक्षी में भासित होता है, न कि प्रत्ययाकार (ध्यानाकार) रूप से भासित होता है, तब वही ध्यान '**समाधि**' कहलाता है। इसमें चित्त प्रत्ययाकाररूप से इसलिये भासित नहीं होता है, क्योंकि ध्येयस्वरूपावेश के कारण चित्त में '**अहमिदं चिन्तयामि**' अर्थात् 'मैं इसका चिन्तन कर रहा हूँ'–इत्याकारक ज्ञानाकारवृत्ति का उदय नहीं होता है। सूत्र में '**इव**' शब्द के प्रयोग का प्रयोजन बतलाया जा रहा है कि समाधिकाल में ध्यान (ज्ञान) की सत्ता पारमार्थिक रूप से रहने के कारण '**इव**' शब्द का प्रयोग किया गया है। अर्थात् ध्यान (ज्ञान) की सत्ता रहते हुए भी उसकी प्रतीति न होने के कारण सूत्र में '**इव**' शब्द का प्रयोग किया गया है। इस प्रकार ध्यातृ-ध्येय-ध्यान के आकलन (परिकलन) से युक्त '**ध्यान**' होता है और तद्राहित्ययुक्त '**समाधि**' होती है। अर्थात् ध्यान में परिलक्षित ध्यातृ-ध्येय-ध्यान का त्रिपुटीभान '**समाधि**' में समाप्त हो जाता है। यही ध्यान और समाधि में पार्थक्य है। समाधि का यह लक्षण पूर्व सूत्र में कहे हुए ध्यान के देश से घटित होने के कारण अपरिच्छिन्न समाधि में व्याप्त नहीं होता है। अर्थात् सीमित समाधि का सीमित लक्षण अपरिच्छिन्न (व्यापक) समाधि में घटित नहीं होता है। अत एव '**अर्थमात्रावभासनं चिन्तनं समाधिः**' अर्थात् 'ध्येयमात्र के अवभास से युक्त चिन्तन को '**समाधि**' कहते हैं'–यही समाधि का सामान्यलक्षण है, क्योंकि ईश्वरगीता के पूर्वोदाहृत वाक्य से समाधि का इत्याकारक लक्षण सिद्ध होता है। अथवा गरुडपुराण में समाधि का लक्षण इस प्रकार किया गया है–'**ध्यानं...सोऽभिधीयते**' (१/२२७/२५) अर्थात् 'मन को द्वादशध्यान के कालपर्यन्त ब्रह्म में नियोजित करे। ब्रह्म में लयता को प्राप्त होता हुआ मन तब अवस्थित रहे तो, उसी को 'समाधि' कहते हैं।' (धारणा और ध्यान की भाँति) यहाँ भी '**समाधि**' के सूत्रात्मक विशेष लक्षण को 'ध्यान के द्वादशगुणित काल से अवच्छिन्न' इत्याकारक विशेषण से युक्त समझना चाहिये। अर्थात् समाधि का अल्पतम काल द्वादश ध्यान के काल से अवश्य ही मर्यादित (सीमित, अवच्छिन्न) होना चाहिये।

---

1. ख–**यत्तु** 'एकाकारः समाधिः **स्याद्देशालम्बनवर्जितः**'–**इत्युक्तगीतावाक्ये समाधौ देशस्यापि त्याग उक्तः सोऽपि प्रकारान्तरेमेव न त्वत्र सूत्रे विवक्षितम्। उत्तरसूत्रे वक्ष्यमाणस्य धारणादित्रयैकविषय-त्वस्यानुपपत्तेरिति** (**विशेषणीयमिति**–पश्चात्) उपलभ्यते, क ग घ च छ–**यत्तु...नुपपत्तेरिति** नोपलभ्यते।

धारणा, ध्यान तथा समाधि में अन्तर बताने के पश्चात् वार्त्तिककार समाधि तथा योग के अन्तर को भी स्पष्ट करते हैं–

### योगवार्त्तिकम्

**अस्य च समाधिरूपस्याङ्गस्याङ्गियोगसंप्रज्ञातयोगादयं भेदो यदत्र चिन्तारूपतया [1]विशेषतो ध्येयस्वरूपं न भासते; अङ्गिनि तु संप्रज्ञाते साक्षात्कारोदये समाध्यविषया अपि विषया भासन्त इति। तथा च साक्षात्कारयुक्तैकाग्र्यकाले संप्रज्ञातयोगोऽन्यदा तु समाधिमात्रमिति विभागः। अष्टानां चाङ्गानां फलद्वयं संप्रज्ञातयोगस्तद्द्वाराऽसंप्रज्ञातयोगश्चेति॥३॥**

अङ्गी **सम्प्रज्ञात** योग से अष्टाङ्गयोगवर्ती '**समाधि**' अङ्ग (उपाय) का अन्तर यह है कि चिन्तनरूप होने से समाध्यङ्ग में ध्येय का स्वरूप विशेषरूप से भासित नहीं होता है जब कि अङ्गी सम्प्रज्ञातयोग में (ध्येय के) साक्षात्कार का उदय होने पर अर्थात् ऋतम्भरा प्रज्ञारूप शक्तिविशेष का आविर्भाव होने पर समाधि के आविषयीभूत पदार्थ भी भासित होने लगते हैं अर्थात् अकल्पित और अचिन्त्य पदार्थ भी अवभासित होते हैं। इस प्रकार चित्त के साक्षात्कारयुक्त एकाग्रताकाल में 'सम्प्रज्ञात' योग होता है और तदतिरिक्त अवस्था में चित्त केवल 'समाधि' वाला होता है। उपायभूत '**समाधि**' और '**सम्प्रज्ञात**' योग में यही अन्तर है। योग के इन आठ अङ्गों के दो फल हैं–पहला सम्प्रज्ञात योग तथा दूसरा (तद्विधया) असम्प्रज्ञात योग॥३॥

### व्यासभाष्यम्

**[2]तदेतद्धारणाध्यानसमाधित्रयमेकत्र संयमः।**

धारणा, ध्यान तथा समाधि ये तीनों संयुक्त रूप में 'संयम' कहे जाते हैं–ऐसा सूत्रकार बतलाते हैं–

### योगसूत्रम्

## [3]त्रयमेकत्र संयमः ॥४॥

एक विषय में धारणा-ध्यान-समाधि-त्रय की सहावस्थिति को 'संयम' कहते हैं॥४॥

### व्यासभाष्यम्

**एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते। तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति॥४॥**

---

1. क ख ग घ–**निशेषतः**, च छ–**विशेषतः**।
2. घ प फ य–**तदेतद्धारणाध्यानसमाधित्रयमेकत्र संयमः** ३/४ सूत्रस्य अवतरणिका, क ख ग च छ ज झ त थ द ध न ब भ म र–**तदेतत्...संयमः** ३/४ सूत्रस्य अवतरणिका।
3. **तत्**–(**त्रयम्**-प्राक्) उपलभ्यते।

धारणा, ध्यान और समाधि–ये तीनों साधन एक ध्येयनिष्ठ अर्थात् ध्येयातिरिक्त अन्य विषयक न होने पर 'संयम' कहे जाते हैं। इसलिये इन तीनों की (सम्मिलित रूप में) शास्त्रीय परिभाषा 'संयम' है॥४॥

### तत्त्ववैशारदी

**धारणा ध्यानं समाधिरित्येतत्त्रयस्य तत्र तत्र नियुज्यमानस्य प्रातिस्विकसंज्ञोच्चारणे गौरवं स्यादिति लाघवार्थं परिभाषासूत्रमवतारयति–[1]तदेतदिति। त्रयमेकत्र संयमः। व्याचष्टे–एकविषयाणीति। वाचकत्वशङ्कामपनयति–तदस्येति। तन्त्र्यते व्युत्पाद्यते योगो येन शास्त्रेण तत्तन्त्रम्। तद्भवा तान्त्रिकी। संयमप्रदेशाः परिणामत्रयसंयमात् इत्येवमादयः॥४॥**

धारणा, ध्यान तथा समाधिजन्य सिद्धियों के प्रसंग में स्थल-स्थल पर प्रयुज्यमान धारणादित्रय का '**प्रातिस्विक**' अर्थात् पृथक्-पृथक् निर्देश करने में गौरवदोष उपस्थित होगा, अतः (इसके निवारणपूर्वक) लाघवगुण की प्रतिष्ठापना के लिये भाष्यकार इनके परिभाषा सूत्र को अवतरित करते हैं–'**तदेतदिति।**' सूत्र है–'**त्रयमिति।**' भाष्यकार सूत्र की व्याख्या करते हैं–'**एकविषयाणीति।**' जब ये धारणा, ध्यान तथा समाधि तीनों साधन एक ध्येयविषयक होते हैं, तब '**संयम**' शब्द से व्यवहृत होते हैं। '**संयम**' शब्द धारणा, ध्यान तथा समाधि इन तीन 'वाच्य' का 'वाचक' है–इत्याकारक भ्रम के निवारणार्थ भाष्यकार 'संयम' शब्द के वाचकत्व का खण्डन करते हैं–'**तदस्येति।**' तत्त्ववैशारदीकार भाष्य में प्रयुक्त '**तान्त्रिकी**' पद की व्युत्पत्ति करते हैं–'**तन्त्र्यते व्युत्पाद्यते योगो येन शास्त्रेण तत्तन्त्रम्**' अर्थात् जिस शास्त्र के द्वारा योग को व्युत्पादित अर्थात् प्रतिपादित किया जाता है, उस शास्त्रविशेष को '**तन्त्र**' कहते हैं और '**तद्भवा तान्त्रिकी**' अर्थात् उस तन्त्र से सम्बन्धित परिभाषा को '**तान्त्रिकी**' कहते हैं। इस प्रकार '**संयम**' शब्द का जो धारणादि अर्थ है, वह योगशास्त्र की परिभाषा के अनुसार है, न कि शब्दवृत्ति के अनुसार। '**परिणामत्रयसंयमात्**' इत्यादि सूत्रों द्वारा संयम के प्रदेश कहे गये हैं। अर्थात् संयम का विनियोग जिस-जिस सिद्धि के प्राप्त्यर्थ किया जाता है–संयम के वे प्रदेश आगे स्पष्ट किये जायेंगे॥४॥

**बालप्रिया–**

'**तान्त्रिकी**' (तन्त्+अच्+ठक्)–'**तत्र भवः**' इस अर्थ में 'तन्त्र' शब्द से 'ठक्' प्रत्यय करने पर '**तान्त्रिकी**' पद निष्पन्न होता है॥४॥

### योगवार्त्तिकम्

**ध्यानादित्रयस्य परिभाषासूत्रम्–त्रयमेकत्र संयमः। अस्मिन्नेव पादे प्रोक्ततया त्रयशब्देन धारणादित्रयमेव लभ्यते। भाष्यं सुगमम्। धारणाध्यानसमाधीनां मिलितानां तत्र तत्र**

---

1. थ द ध–तदेतदिति उपलभ्यते, क ख ग घ च छ ज झ त न–तदेतदिति नोपलभ्यते।

**सूत्रेऽ[1]नया संज्ञया ग्रहणं भविष्यति, तेषु च प्रातिस्विकरूपैस्त्रयाणामुच्चारणे ग्रन्थबाहुल्यं स्यादित्याशयेन तन्त्रान्तरसिद्धसंज्ञाप्रतिपादकमिदं सूत्रम्॥४॥**

पतञ्जलि धारणा, ध्यान तथा समाधि इन तीन के परिभाषा-सूत्र को सूत्रित करते हैं–**'त्रयमिति।'** भाष्यार्थ सुकर है। समुदित धारणा-ध्यान-समाधित्रय को **'संयम'** शब्द द्वारा तत्-तत् आगामी सूत्रों में गृहीत किया जायेगा अर्थात् धारणादित्रिक के लिये **'संयम'** शब्द का प्रयोग किया जायेगा, क्योंकि प्रातिस्विकरूप से (पृथक्-पृथक् रूप से) धारणादि तीन का उच्चारण करने पर ग्रन्थविस्तर होगा। इस अभिप्राय से अन्य शास्त्र (तन्त्रान्तर) में सुप्रतिष्ठित **'संयम'** संज्ञा को बतलाने वाला यह सूत्र है॥४॥

**बालप्रिया–**

**'धारणादित्रयस्य परिभाषासूत्रम्'**–परिभाषा और लक्षण का अन्तर यहाँ ज्ञातव्य है। परिभाषा–(1) **आधुनिकसंकेतः। यथा शाब्दिकमते वृद्धिपदस्याकारैकारौकारेषु** पाणिनि-**संकेतः।** (2) **अनियमे नियमकारिणी परिभाषा**-( न्यायकोश पृ. ४८० ); लक्षण–(1) **उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मः। यथा इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्। त्रिविधा शास्त्रस्य प्रवृत्तिः। उद्देशः लक्षणं परीक्षा चेति।** (2) **दूषणत्रयरहितो धर्मः। यथा गोर्लक्षणं सास्नादिमत्त्वम्।** (3) **वेदान्तिनस्तु यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मः।** (4) **सजातीयविजातीयव्यावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्धः आकारो लक्षणम्।** (5) **व्यावर्तकम्** (6) **स्वरूपम्** (7) **प्रतिपाद्यो विषयः। यथा जैमिनिर्द्वादशलक्षणीं प्रणिनाय इत्यादौ** (8) **आलोचनम्** (9) **अन्यदीयधर्मराहित्यम्** (10) **शाब्दिकास्तु शब्दसाधुता-प्रतिपादकं प्रमाणम्** (11) **व्यवहारज्ञास्तु व्यवहारोपयोगि नाम इत्याहुः।** (12) **चिह्नम् इति काव्यज्ञा वदन्ति**–( न्यायकोष पृ. ६९६ ) ॥४॥

### योगसूत्रम्

## तज्जयात्प्रज्ञालोकः॥५॥

संयमजय से (साधक के अन्तःकरण में) प्रज्ञा का प्रकाश होता है ॥५॥

### व्यासभाष्यम्

**तस्य संयमस्य जयात्समाधि[2]प्रज्ञाया भवत्यालोकः, यथा यथा संयमः स्थिर-**

1. क ग घ च छ–अनया, ख–तया।
2. क ग घ च छ त थ द ध न प फ ब भ म य र–प्रज्ञायाः, ख ज झ–प्रज्ञया।

**पदो भवति तथा** [1]**तथा समाधिप्रज्ञा** [2]**विशारदीभवति ॥५॥**

उस संयम के जय से समाधिप्रज्ञा का प्रकाश होता है। जैसे-जैसे संयम दृढ़तर होता जाता है, वैसे-वैसे समाधिजन्य बुद्धि निर्मलतर होती जाती है॥५॥

**तत्त्ववैशारदी**

**संयमविजयस्याभ्याससाधनस्य फलमाह—तज्जयात्प्रज्ञालोकः। प्रत्ययान्तरानभिभूतस्य निर्मलप्रवाहेऽवस्थानमालोकः प्रज्ञायाः। सुगमं भाष्यम्॥५॥**

सूत्रकार '**अभ्यास**' साधन से विजित '**संयम**' के फल को कहते हैं—'**तदिति**।' प्रत्ययान्तर से अतिरस्कृत (एकाग्रातिरिक्त व्युत्थित वृत्ति से रहित) ध्येय वृत्ति के निर्मल प्रवाह में प्रज्ञा का आलोक (प्रकाश) स्थिर (दीप्त) होता है। भाष्यार्थ सुगम है॥५॥

**योगवार्त्तिकम्**

**संयमसिद्धयोऽग्रे विस्तरतो वक्ष्यन्ते, सांप्रतं संयमस्य योगाङ्गताप्रयोजकं द्वारमाह— तज्जयात्प्रज्ञाऽऽलोकः। तज्जयः संयमस्य जयः स्थैर्यं सात्म्यमिति यावत्। तस्मात्प्रज्ञाया आलोको दीप्तिर्वृद्धिः क्रमेण भवतीत्यर्थः। तदेतद् व्याचष्टे—तस्येति। स्वोक्तं विवृणोति—यथेति। वैशारद्यं चा**[3]**तिसूक्ष्मव्यवहिताद्यर्थानां परप्रत्यक्षीकरणसामर्थ्यमिति॥५॥**

संयमजन्य सिद्धियाँ आगे के सूत्रों में विस्तारपूर्वक कही जायेंगी। सम्प्रति, संयम के योगाङ्गताप्रयोजक (जिस माध्यम से धारणादि 'योग' के अङ्ग बनते हैं, उस) द्वार (मध्यवर्ती व्यापार) को सूत्रकार बतलाते हैं—'**तदिति**।' सूत्रगत '**तज्जय**' शब्द का अर्थ 'संयमजय' है और '**संयमजय**' धारणादि की स्थिरता को कहते हैं। इस संयमजय से 'प्रज्ञालोक' अर्थात् ज्ञान का आलोक अर्थात् दीप्ति क्रमशः वृद्धि को प्राप्त होती है। भाष्यकार सूत्र के इसी अर्थ को बतलाते हैं—'**तस्येति**।' भाष्यकार स्वकथित सूत्रार्थ को पुनः स्पष्ट करते हैं—'**यथेति**।' (परमाण्वादि) अतिसूक्ष्म, (भूगर्भादि) व्यवहितादि पदार्थों के प्रकृष्ट प्रत्यक्षीकरण के सामर्थ्य को '**वैशारद्य**' कहते हैं। अर्थात् सूक्ष्मादि पदार्थों के निर्भ्रान्त प्रत्यक्ष के सामर्थ्यविशेष को '**वैशारद्य**' कहा गया है॥५॥

**योगसूत्रम्**

## तस्य [4]भूमिषु विनियोगः॥६॥

---

1. द—**ईश्वरप्रसादात्** (**तथा**—पश्चात्) उपलभ्यते, क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र—**ईश्वरप्रसादात्** नोपलभ्यते।
2. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**विशारदी०**, ब—**स्थिरपदी०**।
3. क ख घ च छ—**अति**, ग—**प्रति**।
4. **भूमि०**—इति पाठान्तरम्।

उस संयम का (उत्तरोत्तर) भूमियों में विनियोग (प्रयोग) करना चाहिये ॥६॥

**व्यासभाष्यम्**

**तस्य संयमस्य जितभूमेर्यानन्तरा भूमिस्तत्र विनियोगः। न ह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते तदभावाच्च कुतस्[1]तस्य प्रज्ञालोकः? ईश्वर[2]प्रसादाज्जितोत्तरभूमिकस्य च नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः। कस्मात्? तदर्थस्या[3]न्यत एवा[4]वगतत्वात्। भूमेरस्या इयमनन्तरा भूमिरित्यत्र योग एवोपाध्यायः। कथम्? एवं [5]ह्युक्तम्—**

**योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते ।**
**[6]योऽप्रमत्तस्तु योगेन [7]स योगे रमते चिरम् ॥ इति॥६॥**

जितभूमिक संयम का अव्यवहित अजितभूमि में विनियोग (प्रयोग) करना चाहिये। पूर्व की भूमि को जीते विना कोई भी योगी, उसके बाद वाली बीच की भूमि को लांघकर, अन्तिम भूमियों में संयम की स्थापना नहीं कर सकता है। अतः क्रमशः सम्पूर्ण भूमियों में संयम का अभाव होने से उस अजित भूमि वाले योगी को कैसे 'प्रज्ञालोक' हो सकता है? किन्तु ईश्वर के प्रसाद (कृपा) से जिसने उत्तरभूमि को जीत लिया है, उसके लिये परचित्तादिज्ञानरूप नीचे की भूमियों में संयम करना उचित नहीं है। क्योंकि उसे अन्तिम भूमि का फल अन्य (ईश्वरप्रणिधान) उपाय से प्राप्त हो चुका रहता है। इस पूर्व भूमि की अपेक्षा यह उत्तर भूमि है—इस प्रकार का विशेष ज्ञान तो योगाभ्यासरूप उपाध्याय अर्थात् गुरु से ही हो सकता है। योगाभ्यास कैसे प्रमाण है? क्योंकि शास्त्रों में ऐसा ही कहा गया है—'योग को योग के द्वारा ही जानना चाहिये, क्योंकि योग से ही योग सिद्ध होता है। जो योगी योग का अभ्यास तत्परता के साथ करता है, वह दीर्घ काल तक योग में रमण करता है' ॥६॥

---

1. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**तस्य**, ब—**तत्र**।
2. क ग छ थ न—**प्रणिधानात्**, घ च ज झ त द ध प फ भ म य र—**प्रसादात्**, ख ब—**प्रणिधानात्/प्रसादात्** नोपलभ्यते।
3. क ख ग छ थ ब—**अन्यथा**, घ च ज झ त द ध न प फ भ म य र—**अन्यतः**।
4. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**अवगतत्वात्**, ब—**अनधिगतत्वात्**।
5. क ख ग च छ ज झ त थ द ध न ब भ म य—**हि** उपलभ्यते, घ प फ र—**हि** नोपलभ्यते।
6. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**यः** उपलभ्यते, ब—**यः** नोपलभ्यते।
7. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**स योगे**, ब—**योगेषु**।

तत्त्ववैशारदीकार प्रस्तुत सूत्र को प्रश्नपरक अवंतरणिका के साथ उपस्थित करते हैं–

**तत्त्ववैशारदी**

**क्व पुनर्विनियुक्तस्य संयमस्य फलमेतदित्यत आह–तस्य भूमिषु विनियोगः। भूमिं विशेषयति भाष्यकारः–तस्येति। जिताया भूमेर्यानन्तरा भूमिरवस्थाऽजिता तत्र विनियोगः। स्थूलविषये सवितर्के समाधौ वशीकृते संयमेन संयमस्या[1]विजिते निर्वितर्के विनियोगः। तस्मिन्नपि वशीकृते सविचारे विनियोगः। एवं निर्विचारे विनियोग इत्यर्थः। [2]अत एव स्थूलविषयसमापत्तिसिद्धौ सत्यां पुराणे तत्तदायुधभूषणापनयेन सूक्ष्मविषयः समाधिरवतारितः–**

**ततः शङ्खगदाचक्रशार्ङ्गादि[3]रहितं बुधः।**
**चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम्॥**
**यदा च धारणा तस्मिन्नवस्थानवती ततः।**
**किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत्॥**
**[4]तदेकावयवं देवं सोऽहं चेति पुनर्बुधः।**
**कुर्यात्ततो ह्यहमिति प्रणिधानपरो भवेत्॥**

शङ्का–किस विषय में प्रयुक्त किये गये संयम से यह **'प्रज्ञालोक'** रूप फल योगी को प्राप्त होता है अर्थात् प्रकृत संयम के विनियोग का क्षेत्र क्या है?

**समाधान**–उक्त शंका के समाधानार्थ सूत्रकार कहते हैं–**'तस्येति'**। भाष्यकार भूमि के विषय में विशेष व्याख्यान करते हैं–**'तस्येति'**। संयमित अर्थात् विजित भूमि की पश्चाद्वर्ती जो अव्यवहित अजित भूमि होती है, उसमें संयम का उपयोग (विनियोग) किया जाता है। अर्थात् योग की उत्तरोत्तर भूमि पर विजय प्राप्त करने के लिये योगी को तत्तद् भूमियों में क्रमशः **'संयम'** का विनियोग करना चाहिये।

सम्प्रति, तत्त्ववैशारदीकार योगभूमि के विषय में क्रम-सम्बन्धी मान्यता को सुस्पष्ट करते हैं–संयम द्वारा स्थूलविषयक **'सवितर्क'** समाधि के हस्तगत (विजित) हो जाने पर संयम का अनधीन अर्थात् अविजित **'निर्वितर्क'** समाधि में विनियोग किया जाता है। **'निर्वितर्क'** के वशीकृत होने पर **'सविचार'** में **'संयम'** का विनियोग किया जाता है और तत्पश्चात् **निर्विचार'** में। अत एव विष्णुपुराण में तत्तद् आयुध, भूषणादि सहित **'स्थूल'** (भगवद्विग्रह) विषयक समापत्ति सिद्ध होने पर उक्त

---

1. ग घ च छ ज झ थ द ध न–**अविजिते** उपलभ्यते, क ख त–**अविजिते** नोपलभ्यते।
2. क ख ग घ च छ ज झ त ध न–**अत एव**, थ द–**एवम्**।
3. क ख ग घ च छ ज झ त थ द ध–**रहितम्**, न–**सहितम्**।
4. क ख ग घ च त न–**तत्**, छ ज झ थ द ध–**तदा**।

आयुध- भूषणादि के परित्यागपूर्वक '**सूक्ष्म**' विषयक समापत्ति की अवतारणा हुई है— '**ततः...भवेत्**' अर्थात् 'सबसे पहले योगी शंख, चक्रादि आयुध तथा किरीट, केयूरादि भूषण सहित भगवान् के रूप का चिन्तन करे। तत्पश्चात् शंख, चक्र, गदा तथा शार्ङ्ग आदि आयुधरहित केवल अक्ष, सूत्रादि भूषण सहित ही प्रशान्त भगवान् के रूप का चिन्तन करे। और जब उस रूप में धारणा स्थिरता को प्राप्त हो जाय तब उसको त्यागकर किरीट, केयूर आदि प्रधान भूषणों से रहित केवल भगवान् के शरीर मात्र का चिन्तन करे। तत्पश्चात् उसको भी त्यागकर भगवान् के केवल मुखारविन्द रूप एक अवयव का ही चिन्तन करे। फिर उस स्थूलरूप को भी त्यागकर 'सोऽहम्' 'सोऽहम्'—इस प्रकार की सूक्ष्मविषयक भावना करते हुए योगी ईश्वरप्रणिधान में तत्पर रहे।'

सम्प्रति, तत्त्ववैशारदीकार भूमिजय के लिये निर्दिष्ट क्रम-निर्वाह के औचित्य को स्पप्ट करते हैं–

### तत्त्ववैशारदी

**कस्मात्पुनरधरां भूमिं विजित्योत्तरां विजयते, विपर्ययः कस्मान्न भवतीत्यत** आह—**न ह्यजिताधरभूमिरिति। न हि शिलाह्रदाद् गङ्गां प्रति प्रस्थितोऽप्राप्य मेघवनं गङ्गां प्राप्नोति।**

**शङ्का**—किस कारण से अधर (पूर्ववर्ती) भूमि को जीतकर उत्तर (पश्चाद्वर्ती) भूमि पर विजय प्राप्त की जाती है। क्रम का उल्लंघन करके उत्तरभूमि को जीतकर पूर्व भूमि को क्यों नहीं जीता जाता है?

**समाधान**—उक्त शंका को ध्यान में रखकर भाष्यकार कहते हैं–'**न ह्यजिताधर-भूमिरिति**।' (पूर्व भूमि पर सफलता प्राप्त किये विना कोई भी योगी, मध्य की भूमि का तिरस्कार कर, '**प्रान्त**' अर्थात् अन्तिम भूमि में संयम का सफल विनियोग नहीं कर सकता है। अतः उत्तरोत्तर भूमि में संयमलाभ न होने पर तज्जन्य '**प्रज्ञालोक**' की प्रत्याशा करना व्यर्थ है। जैसे शिलाह्रद (हिमालय) से गंगा की प्राप्ति के लिये निकला व्यक्ति मेघवन तक पहुँचे विना गंगा को प्राप्त नहीं कर पाता है।

**बालप्रिया**—

'**अधरां भूमिं...**'— भूमिक्रम इस प्रकार है—'**ग्राह्य**' समापत्ति अधरभूमि है, '**ग्रहण**' समापत्ति मध्यभूमि है और '**ग्रहीतृ**' समापत्ति प्रान्तभूमि है। अलब्धप्रान्तभूमि की निष्फलता है—योगी के अन्तःकरण में '**प्रज्ञालोक**' का समग्र रूप प्रादुर्भूत न हो पाना।

सम्प्रति, तत्त्ववैशारदीकार भूमियों पर विजय प्राप्त करने की उपरिवर्णित सामान्य प्रक्रिया के अपवाद को उठाते हैं–

### तत्त्ववैशारदी

**ईश्वरप्रसादाज्जितोत्तरभूमिकस्य चेति। कस्मात्? तदर्थस्योत्तरभूमि[1]विजयस्य प्रत्यासन्नस्यान्यत एवेश्वरप्रणिधानादेवावगतत्वात्। निष्पादितक्रिये कर्मण्य[2]विशेषाधायिनः साधनस्य [3]साधनन्यायातिपातादिति।**

(ईश्वरानुग्रह से कृतकृत्य योगी भूमिक्रम का अतिक्रमण कर सहजतया अन्तिम भूमि को प्राप्त करने में सक्षम होता है, इसे अपवादस्वरूप बतलाते हुए भाष्यकार ईश्वराराधन को योगसाधना का उत्कृष्टतम साधन घोषित करते हैं)–'**ईश्वर-प्रसादाज्जितोत्तरभूमिकस्य चेति**।' ईश्वर की कृपा से विजित उत्तरभूमिक साधक को परचित्तज्ञानादि अधर भूमियों के जय के लिये '**संयम**' की अपेक्षा नहीं रहती है।

**शङ्का**–किस कारण से जितोत्तरभूमिक साधक को पूर्ववर्त्तिनी अजित भूमियो में सफलता प्राप्त करने के लिये संयम की अपेक्षा नहीं रहती है?

**समाधान**–'**अधरभूमि**' के जय के क्रम से प्राप्त होने वाली '**उत्तरभूमि**' का विजयरूप प्रयोजन '**संयम**' से भिन्न ईश्वरप्रणिधानजन्य ईश्वर-प्रसाद से ही जिस योगी को सिद्ध हो जाता है, उसे पूर्व भूमियों को लेकर संयम नहीं करना पड़ता है। क्योंकि क्रिया के निष्पन्न हो जाने पर निष्पादित कर्म में विशेष का आधान न करने वाले साधन का साधनन्याय अतिक्रमित हो जाता है। (क्योंकि अनिष्पन्न को निष्पन्न करने वाले को '**साधन**' कहते हैं, न कि निष्पन्न को सिद्ध करने वाला '**साधन**' कहा जाता है। अतः क्रिया-निष्पत्ति के पश्चात् सिद्ध के प्रति साधन का साधनत्व समाप्त हो जाता है–इसी तथ्य को तत्त्ववैशारदीकार ने '**साधनन्यायाऽतिपातात्**' पद के द्वारा कहा है। प्रकृत में यह सिद्धान्तित हुआ कि उत्तरभूमिजयी के लिये संयमसाध्य पूर्वभूमि-जय साधन नहीं बनता है, क्योंकि उत्तरभूमिजयरूप क्रिया के निष्पन्न हो जाने से अनिष्पन्न उत्तरभूमि में साधन बनने वाला–पूर्वभूमिजय अपने साधनत्व की शक्ति से च्युत हो जाता है)।

सम्प्रति, भूमिक्रम की प्रामाणिकता पर विचार किया जा रहा है–

### तत्त्ववैशारदी

**स्यादेतत्–आगमतः सामान्यतोऽवगतानामप्य[4]वान्तरभूमिभेदानां कुतः पौर्वापर्याव-गतिरित्यत आह–भूमेरस्या इति। जितः पूर्वो योग उत्तरस्य योगस्य ज्ञानप्रवृत्त्यधिगमहेतुः। अवस्थैवावस्थावानित्यभिप्रेत्यैतद् द्रष्टव्यम्॥६॥**

---

1. क ख ग ज त थ द ध–**विजय०**, घ च छ न–**विजयस्य**, झ–**विजयाय**।
2. क ख ग घ च छ ज झ त न–**अविशेषाधायिनः**, थ द ध–**विशेषानाधायिनः**।
3. क ख ग थ द ध–**साधन०**, घ च छ ज झ त न–**असाधन०**।
4. क ख ग घ च छ ज झ त द ध न–**अवान्तरभूमिभेदानां**, थ–**अवान्तरविभेदानाम्**।

**शङ्का**—यद्यपि आगम प्रमाण से योग की समस्त अवान्तरभूमियों का सामान्यरूप से अवबोध हो जाता है तथापि भूमियों के पौर्वापर्य (यह प्रथम भूमि है तथा यह द्वितीय भूमि है– इस क्रम) का विशेष ज्ञान कैसे होता है?

**समाधान**—इस पर भाष्यकार कहते हैं–'**भूमेरस्या इति**' विजित पूर्व योग (पहली भूमि) ही उत्तर योग (दूसरी भूमि) की ज्ञानप्रवृत्ति का अधिगमहेतु (प्रत्ययकारण) होता है। इसीलिये भाष्यकार ने यह कहा है कि इस पूर्व भूमि की यह अनन्तरा भूमि है, इसके परिज्ञान में योगाभ्यास ही '**उपाध्याय**' अर्थात् गुरु है। इस विषय में यौगिक अनुभव को प्रमाणरूप से स्वीकार करते हुए भाष्यकार द्वारा उद्धृत श्लोक में प्रयुक्त '**योगेन योगः**'–में निहित गूढाभिसन्धि को स्पष्ट करते हुए तत्त्ववैशारदीकार कहते हैं–'अवस्था ही अवस्थावान् होता है'–इस अभिप्राय से (अवस्था-अवस्थावान् में अभेदविवक्षया) अवस्था=भूमि को ही अवस्थावान् (योग) समझकर '**भूमि**' के लिये '**योग**' शब्द का प्रयोग हुआ है अर्थात् भूमियों का योगत्व अभिहित हुआ है। शब्दान्तर में 'उत्तरोत्तर भूमिजय से योग प्राप्त होता है'– ऐसा न कहकर श्लोक में 'योग से योग प्राप्त होता है'– यह कथन अवस्था-अवस्थावान् के अभेद की विवक्षा से है॥६॥

**बालप्रिया**—

'**उपाध्यायः**'—**गुरुः। योगबलेन स्वयमेव जानातीत्यर्थः।**

'**योगेनाप्रमत्तः**'—इस पद का अर्थ है—सिद्धिलिप्साशून्य व्यक्ति॥६॥

### योगवार्त्तिकम्

**संयमस्यानुष्ठाने विशेषमाह—तस्य भूमिषु विनियोगः। तस्य संयमस्य स्थूलादिपूर्वपूर्वभूमिकाजयानन्तरं सूक्ष्मादिषूत्तरोत्तरभूमिकासु नियोजनं योगिना कर्त्तव्यमित्यर्थः। एतदेव व्याचष्टे भाष्यकारः—तस्येति। अनन्तरा अव्यवहिता। क्रमेण भूमिकाऽऽरोहे युक्तिमाह—न हीति। प्रान्तभूम्यपेक्षयाऽधराऽधःस्था भूमिरजिता येन सोऽजिताधरभूमिर्योगी। नहि अनन्तरभूमिमव्यवहितभूमिं विलङ्घ्य[1]प्रान्तभूमिषु व्यवहितोत्तरभूमिषु संयमं लभते, धनुर्धरादिषु स्थूलवेधाद्यनन्तरमेवं सूक्ष्मे वेधादिदर्शनात्सोपानारोहणादिषु च क्रमेणै[2]वारोहादिदर्शनात्, अन्यथाऽधःपातात् तदभावाच्चेति। ततश्च संयमालाभात् कुतः प्रज्ञाऽऽलोकस्तत्तद्भूमिषु स्यादित्यर्थः। तथा चोक्तं गारुडे—**

**स्थित्यर्थं मनसः पूर्वं स्थूलरूपं विचिन्तयेत्।**
**तत्र तन्निश्चलीभूतं सूक्ष्मेऽपि स्थिरतां व्रजेत्॥ इति।**

1. क ग—**अप्रान्त०**, ख घ—**प्रान्त०**, च छ—**अप्राप्त०**।
2. ख ग—**सोपान०** (एव—पश्चात्) उपलभ्यते, क घ च छ—**सोपान०** नोपलभ्यते।

धारणादि संयम के अनुष्ठान के विषय में एक विशेष तथ्य को सूत्रकार कहते हैं–'**तस्येति।**' स्थूलादि (स्थूलविषयक) पूर्व-पूर्व भूमि को जीतने के पश्चात् योगी को सूक्ष्मादि (सूक्ष्मविषयक) उत्तरोत्तर भूमियों में '**संयम**' का '**विनियोग**' करना चाहिये। भाष्यकार सूत्र के इसी अर्थ को बतलाते हैं–'**तस्येति।**' भाष्य में प्रयुक्त '**अनन्तरा**' शब्द का अर्थ '**अव्यवहित**' है। अर्थात् जितभूमि के अव्यवहित बाद की अजितभूमि में संयम का विनियोग किया जाता है। भूमिकारोहण के विषय में क्रम की युक्तियुक्तता पर भाष्यकार प्रकाश डालते हैं–'**न हीति।**' जिसके द्वारा प्रान्त भूमि (अन्तिम भूमि) की अपेक्षा पूर्व-पूर्व भूमि (अधरोधर भूमि) विजित नहीं की गई है, वह '**अजिताधरभूमिक योगी**' कहलाता है। अनन्तर भूमि अर्थात् अव्यवहित पूर्व भूमि को लांघकर (जीते विना) '**प्रान्त भूमियों**' में अर्थात् व्यवहित उत्तरोत्तर भूमियों में '**संयम**' नहीं किया जा सकता है, क्योंकि धनुर्धारियों में स्थूल लक्ष्य (पदार्थ) के भेदन के पश्चात् ही सूक्ष्म पदार्थविषयक भेदन-क्रिया परिलक्षित होती है तथा सोपानारोहण (सीढ़ी चढ़ने की) क्रिया में भी क्रमशः आरोहणव्यापार परिलक्षित होता है। क्योंकि आरोहण-क्रम का उल्लंघन करने पर अधःपतन होता है तथा प्रान्त भूमि का लाभ भी योगी को नहीं होता है। परिणामस्वरूप '**संयम**' के अविनियुक्त रहने से तत्तत् सूक्ष्मादिविषयक भूमियों में ज्ञान का प्रकाश कैसे हो सकता है? अर्थात् योगी को सूक्ष्म पदार्थ का स्फुरण नहीं हो पाता है। जैसा कि गरुडपुराण में कहा गया है– '**स्थित्यर्थं...व्रजेत्**' (१/१२७/३३) अर्थात् 'मन की स्थिति अर्थात् एकाग्रता के लिये पहले पदार्थ के स्थूलरूप का चिन्तन करना चाहिये। तत्पश्चात् स्थूलरूप में एकाग्रीभूत मन को सूक्ष्मरूप में भी स्थिरता प्राप्त करानी चाहिये।'

सम्प्रति, भूमिकारोहण के विषय में विशेष विचार प्रस्तुत हो रहा है–

## योगवार्त्तिकम्

**अयं च भूमिकारोहे क्रमश्चौत्सर्गिकः कदाचिदपोद्यतेऽपीत्याह–[1]जितोत्तरेति। ईश्वरप्रसादादादावेव वशीकृतप्रकृतिपुरुषविवेकादिभूमिकस्य योगिनो नाधोभूमिषु परचित्तज्ञानादिषु परचित्तप्रत्ययादिषु प्रत्यये परचित्तज्ञानमित्याद्यागामिसूत्र[2]वाच्येषु विराडादिस्थूलेषु वा संयमो युक्त इत्यर्थः। पृच्छति–कस्मादिति। उत्तरम्–तदर्थस्येति। अधरभूमिसंयमप्रयोजनस्योत्तरभूम्यारोहणस्येश्वरानुग्रहादेवावगतत्वात् प्राप्तत्वादित्यर्थः। ननू[3]त्सर्गात्सिद्धं क्रममुल्लङ्घ्य**

---

1. क घ–**जितोत्तरेति**, ख ग च छ–**जितान्तरेति।**
2. क ग घ च छ–**वाच्येषु**, ख–**वाक्येषु।**
3. क ख घ–**उत्सर्ग०**, ग–**उत्सर्गिक**, च छ–**उत्सर्गात्०।**

**प्रथममुत्तरभूमिकासु संयमारम्भ एव न युक्तः, तत्कथमादौ तज्जयो घटेतेति चेत्? न; युञ्जमानेनादावेव सर्वोत्कृष्टभूमिकायां स्वचित्तस्य परीक्षणीयत्वात्, तत्संयमायोग्यतां स्वस्यानुभूयैवाधरभूमिषु स्वयोग्यतामवधार्य चित्तस्य धारणीयत्वादिति। नन्वेवमधिकारिपुरुषभेदेन भूमिकाक्रमभेदात् कथं स्वयोग्यो भूमिकाक्रमो योगिभिरवधारणीय इति? तत्राह—भूमेरस्या इति। उपाध्यायो गुरुः, योगबलादेव स्वयं जानातीत्यर्थः। अत्र प्रमाणं पृच्छति—कथमिति। उत्तरम्—एवमुक्तमिति। अप्रमत्तः सिद्ध्यलम्पटः॥६॥**

वितर्क, विचारादि भूमिकारोहण के विषय में औत्सर्गिक = सामान्य क्रम ही है। कभी-कभी इस क्रमसामान्य का अपवाद भी होता है। इसी तथ्य को भाष्यकार बतलाते हैं—'**जितोत्तरेति**।' ईश्वर की महती कृपा से योग-साधना के प्रारम्भ काल में ही जिसने प्रकृति-पुरुष की भेदज्ञानविषयिणी भूमि को जीत लिया है, ऐसे साधक को '**प्रत्यये परचित्तज्ञानम्**'(३/१९) इत्याकारक आगामी योग सूत्र में अभिहित अधोभूमिक परचित्तादि के साक्षात्कार के विषय में अथवा विराडादि (विराज्=शरीर आदि) स्थूल पदार्थों के साक्षात्कार के विषय में '**संयम**' करना युक्तियुक्त नहीं है।

**शङ्का**—प्रान्तभूमिजयी को अधोभूमि के स्थूलादि पदार्थों के विषय में संयम क्यों नहीं करना पड़ता है?

**समाधान**—भाष्यकार उत्तर देते हैं—'**तदर्थस्येति**।' अधर भूमि में संयम करने का प्रयोजन जो उत्तरभूमिजय है, वह जिसे ईश्वर के अनुग्रह से ही प्राप्त हो गया है, वह अधर भूमियों में निष्प्रयोजन संयम क्यों करेगा? उसके लिये '**संयम**' करना व्यर्थ है।

**शङ्का**—सामान्यनियम से सुनिश्चित क्रम का अतिक्रमण करके प्रारम्भ में ही उत्तरभूमिकाओं के विषयों को लेकर संयमारम्भ ही साधक द्वारा संभव नहीं है, तो फिर कैसे प्रारंभ में ही प्रान्तभूमिजय निष्पादित हो सकता है?

**समाधान**—ऐसी बात नहीं है, क्योंकि '**युञ्जान**' योगी को (साधना के) आरंभ में ही सर्वोत्कृष्ट (प्रान्त) भूमि के विषय में अपने चित्त-सामर्थ्य का परीक्षण कर लेना चाहिये और फिर उस उत्तरभूमि में '**संयम**' करने की अपनी अयोग्यता को समझकर स्वयोग्यतानुसार अधर भूमियों में ही चित्त को लगाना चाहिये।

**शङ्का**—इस प्रकार तो योग-साधना के अधिकारिपुरुष के भेद से प्रत्येक साधक की साधना का भूमि-क्रम भिन्न-भिन्न होगा तो फिर कैसे योगी अपने लिये उपयुक्त भूमिका-क्रम का निश्चय करेगा?

**समाधान**—इस पर भाष्यकार कहते हैं—'**भूमेरस्या इति**।' भाष्य में प्रयुक्त '**उपाध्याय**' शब्द का अर्थ गुरु है। योगबल से ही योगी स्वतः जान लेता है कि इस पूर्व भूमि की यह अन्तरा भूमि है।

**शङ्का**—ऐसा योगबल होने में ही क्या प्रमाण है—'**कथमिति**।'

**समाधान**—भाष्यकार उत्तर देते हैं—'**एवमुक्तमिति**।' जो योगसिद्धि में प्रमादहीन है उसे यहाँ "अप्रमत्त' कहा गया ॥६॥

अगला सूत्र है—

### योगसूत्रम्

## त्रयमन्तरङ्गं पूर्वेभ्यः ॥७॥ ॥

पूर्ववर्ती (यमादि पांच) साधनों की अपेक्षा धारणादि तीन साधन 'अन्तरङ्ग' हैं ॥७॥

### व्यासभाष्यम्

**तदेतद्धारणाध्यानसमाधित्रयमन्तरङ्गं संप्रज्ञातस्य समाधेः पूर्वेभ्यो [1]यमादिभ्यः पञ्चभ्यः साधनेभ्य इति ॥७॥**

पहले वाले यमादि (यम, नियम, आसन, प्राणायाम तथा प्रत्याहार) पाँच साधनों की अपेक्षा धारणा, ध्यान तथा समाधि ये तीन सम्प्रज्ञात योग के 'अन्तरङ्ग' साधन हैं ॥७॥

### तत्त्ववैशारदी

**कस्मात्पुनर्योगाङ्गत्वाविशेषेऽपि संयमस्य तत्र तत्र विनियोगो नेतरेषां पञ्चानामित्यत आह—त्रयमन्तरङ्गं पूर्वेभ्यः। तदिदं साधनत्रयं साध्यसमानविषयत्वेनान्तरङ्गम्, न त्वेवं यमादयः। तस्मात्ते बहिरङ्गा इत्यर्थः॥७॥**

**शङ्का**—यम, नियमादि आठों साधनों का योगाङ्गत्व समान (अविशेष) रूप से कथित होने पर भी किस कारण से '**संयम**' (धारणा-ध्यान-समाधि तीन अंगों) का ही तत्तद् भूमियों में विनियोग प्रतिपादित हो रहा है, तदतिरिक्त अन्य पाँच योगाङ्गों का नहीं?

**समाधान**—इस पर सूत्रकार कहते हैं—'**त्रयमिति**।' धारणादि तीन साधन साध्यभूत सम्प्रज्ञात के समान विषय वाले होने से '**अन्तरङ्ग**' कहे जाते हैं। यमादि पाँच अङ्गों में सम्प्रज्ञात के प्रति ऐसी समानविषयता न होने से 'अन्तरङ्गता' नहीं है। इसलिये ये '**बहिरङ्ग**' कहे जाते हैं॥७॥

**बालप्रिया**—

'**साध्यसमानविषयत्वेन**'—विचारणीय है कि '**अन्तरङ्ग**' साधन किसे कहते हैं?

---

1. क ख ग च छ झ त थ द ध न ब भ म य र—**यमादिभ्यः पञ्चभ्यः साधनेभ्यः**, घ ज प फ—**यमादिसाधनेभ्यः**।

**शङ्का**–जब शब्द, अर्थ और ज्ञान इन तीनों की अभिन्नरूप से प्रतीति होती है, तो सम्मिश्रित (सङ्करित) इनका विभाग कैसे हो सकता है? इसी अभिप्राय से पूर्वपक्षी पूछता है–'**कस्मादिति**।'

**समाधान**–भाष्यकार उत्तर देते हैं–'**सोऽयमित्यभिसंबन्धादिति**।' यहाँ संकेतरूप उपाधि ही एकाकार ज्ञान का कारण है, न कि तात्त्विक रूप से एकाकार ज्ञान होता है। अर्थात् यथार्थ दृष्टि से शब्द, अर्थ और ज्ञान परस्पर भिन्न-भिन्न हैं। शब्द, अर्थ और ज्ञान के इतरेतराध्यास में संकेत की निमित्तता अर्थात् हेतुता को प्रदर्शित करने के लिये भाष्यकार ने '**संकेते**' इस सप्तम्यन्त पद का प्रयोग किया है। (जैसे '**निमित्तात्कर्मयोगे**' वार्तिक से निमित्त अर्थ में सप्तमी '**चर्मणि द्वीपिनं हन्ति**' उदाहरण में प्रदर्शित की गई है)।

**बालप्रिया**–

'**सोऽयमित्यभिसंबन्धात्**'–अभिप्राय यह है–'**श्वेतनं या क्रिया सोऽयं श्वेतरूपः कारको गुणो यश्च श्वेतत इत्यस्मात् श्वेताकारः प्रत्ययः सोऽयं श्वेत इत्यस्मादपि श्वेताकारः प्रत्यय इत्यभेदप्रत्यभिज्ञानादित्यर्थ इति विज्ञानः**' अर्थात् 'श्वेत होना' जो क्रिया है, वह श्वेतरूप कारकगुण है और '**श्वेतते**' पद से जो श्वेताकार ज्ञान होता है, वही श्वेताकार ज्ञान '**श्वेतः**' इस पद से भी होता है। इस प्रकार अभेदज्ञान होने से प्रत्यय भी एकाकार ही होता है।

अब परमार्थदृष्टि से उक्त विषय का विवेचन किया जा रहा है–

**तत्त्ववैशारदी**

**परमार्थमाह–यस्तु श्वेतोऽर्थ इति। अवस्था नवपुराणत्वादयः। सहगतः संकीर्णः।**

सम्प्रति, भाष्यकार परमार्थदृष्टि से कहते हैं–'**यस्तु श्वेतोऽर्थ इति**।' जो श्वेत गुण-रूप अर्थ है, वह शब्द और ज्ञान के आश्रित है, इसलिये पृथक् है। क्योंकि वह अर्थ अपनी नवीन-प्राचीन आदि अवस्थाओं के द्वारा विक्रिया को प्राप्त होता हुआ न तो शब्द के साथ संकीर्ण है और न ज्ञान के साथ ही संकीर्ण है। अतः सर्वथा भिन्न है। इसी प्रकार शब्द और ज्ञान भी परस्पर संकीर्ण नहीं हैं, सर्वथा पृथक् हैं। यही कारण है कि दूसरे प्रकार का '**शब्द**' है, दूसरे प्रकार का '**अर्थ**' है और दूसरे प्रकार का '**ज्ञान**' है–ऐसा विभाग किया जाता है। भाष्य में '**अवस्था**' शब्द से नवत्व, पुराणत्व आदि अवस्थाएँ गृहीत होती हैं तथा '**सहगत**' शब्द का अर्थ है–संकीर्ण।

**बालप्रिया**–

'**एवं शब्द एवं प्रत्ययो नेतरेतरसहगतः**'–तात्पर्य यह है कि जिस प्रकार '**अर्थ**' तात्त्विक दृष्टि से '**शब्द**' तथा '**प्रत्यय**' से सहगत अर्थात् संकीर्ण नहीं होता है उसी प्रकार '**शब्द**' तथा '**ज्ञान**' भी अन्य दो से परमार्थतः संकीर्ण नहीं होते हैं।

सूत्रार्थ को उपसंहृत करते हुए तत्त्ववैशारदीकार आगे कहते हैं–

**तत्त्ववैशारदी**

**एवं च प्रविभागसंयमाद्योगिनः सर्वेषां भूतानां पशुमृगसरीसृपवयःप्रभृतीनां यानि रुतानि तत्राप्यव्यक्तं पदं तदर्थस्तत्प्रत्ययश्चेति। तदिह मनुष्यवचनवाच्यप्रत्ययेषु कृतः संयमः समानजातीयतया तेष्वपि कृत एवेति तेषां रुतं तदर्थभेदं तत्प्रत्ययं च योगी जानातीति सिद्धम्॥१७॥**

इस प्रकार शब्द, अर्थ तथा ज्ञान के विभाग में संयम करने से पशु, मृग, पक्षी, सरीसृप आदि प्राणियों की बोलियों में निहित अव्यक्त शब्द, अर्थ और ज्ञान को योगी जान लेता है। मनुष्य के वचन (शब्द), वाच्य (अर्थ) और प्रत्यय (ज्ञान)– इन तीनों में सिद्ध संयम, शब्दादि के समानजातीय होने से, पश्वादि प्राणियों के शब्दादि में भी सिद्ध ही माना जाता है। फलतः योगी पश्वादि प्राणियों के शब्दभेद, उनके अर्थभेद और ज्ञानभेद को जानता है–ऐसा सुनिश्चित होता है॥१७॥

**बालप्रिया–**

'**तत्प्रविभागसंयमात्**'–इस कथन के मूल में निम्नाङ्कित प्रश्न अन्तर्निहित है–

**शङ्का**–परीक्षक भी शास्त्रीय दृष्टि से शब्द, अर्थ एवं ज्ञान के विभाग को जानते ही हैं, तो फिर परीक्षकों को प्राणिमात्र की बोलियों का परिज्ञान क्योंकर नहीं होता है?

**समाधान**–इस अन्तर का उत्तर पतञ्जलि ने तथाकथित विभूति को '**संयम**' द्वारा ही हस्तगत बतला कर दिया है। अर्थात् योग की प्रयोगशाला में धारणा, ध्यान तथा समाधि द्वारा परीक्षित शब्दादि का भेदज्ञान ही '**सर्वभूतरुतज्ञान**' का हेतु है।

'**मनुष्यवचनवाच्यप्रत्ययेषु**'–इस कथन के मूल में निम्नाङ्कित प्रश्न अन्तर्निहित है–

**शङ्का**–योगी मनुष्य होता है। अतः वह मनुष्यगत शब्दादिविषयक संयम से मनुष्य की बोली पर भले ही विजय प्राप्त कर ले, किन्तु मनुष्यभिन्न पश्वादि बोलियों पर संयम किये विना उसे भला कैसे '**सर्वभूतरुतज्ञान**' हो सकता है?

**समाधान**–उपरिनिर्दिष्ट सम्भावित शंका को ध्यान में रखकर ही तत्त्ववैशारदीकार ने कहा है–'**मनुष्यवचनवाच्यप्रत्ययेषु...समानजातीयतया...**।' प्राणिमात्र की बोली में शब्दत्व-जाति रहती है। अतः सारे शब्द सजातीय हैं। अतः नीरक्षीरविवेकी हंस के समान योगी को शब्दादिविषयक संयम से '**सर्वभूतरुतज्ञान**' हो सकता है–इसमें किसी प्रकार का सन्देह नहीं करना चाहिये॥१७॥

**योगवार्त्तिकम्**

**संयमान्तरस्य सिद्ध्यन्तरमाह–शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्। गौरित्यादिः शब्दः, गौरित्यादिरर्थः, गौरित्यादिः प्रत्ययः, तेषां वक्ष्यमाणं संकेतरूपादध्यासात्संकरो विवेकाग्रहणं भवति। वस्तुतस्तु तेषां भेदोऽस्ति;**

**अतस्तेषां प्रविभागे भेदे संयमात्साक्षात्कृते सति सर्वभूतानां रुतानि ज्ञायन्ते। अयं काकादिरिममर्थमेवं प्रतीत्यानेन शब्देन कथयतीत्येवमित्यर्थः। यद्यपि साक्षात्कृते सतीति सूत्रे नास्ति तथाऽपि संस्कारसाक्षात्करणादित्युत्तरसूत्रेण साक्षात्कारपर्यन्तस्यैव संयमस्य सिद्धिकथनात्सर्वत्र सूत्रे संयमस्य साक्षात्कारद्वारकत्वं व्याख्येयम्। अत एव भाष्यकारोऽप्यनेक[1]सूत्रेषु दृग्दर्शनार्थसाक्षात्कारपर्यन्ततां संयमस्य व्याख्यास्यति। त्रिविधैरेव शब्दैरर्थप्रत्यययोस्तेषां शब्दानामन्योन्यं च संकरं दर्शयितुं शब्दानामेवादौ त्रैविध्यं दर्शयति भाष्यकारः-तत्र वागिति। तत्र शब्दमध्ये वागिन्द्रियं वर्णेष्वेव प्रयोजनवत् शब्देषु मध्ये वागिन्द्रियजन्यः शब्दो [2]वर्ण एव न तु शृङ्गादिशब्दो नापि वाचकं पदमित्यर्थः। उरआदिषूत्पद्यमानः शब्दो वर्णः—**

**अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।**
**जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च॥**

**इति स्मरणात्।**

सम्प्रति, सूत्रकार अन्यविषयक संयमजन्य सिद्ध्यन्तर को बताते हैं—'**शब्देति**।' '**गौः**' इत्यादि शब्द है, '**गौः**' इत्यादि अर्थ है तथा '**गौः**' इत्यादि ज्ञान है—ऐसे शब्दार्थ-ज्ञान के '**संकेतरूप**' अध्यास के कारण आगे प्रतिपादित होने वाला '**विवेकाग्रहण**' (अविवेकग्रह) रूप '**संकर**' होता है। पारमार्थिक रूप से शब्द, अर्थ तथा ज्ञान तीनों में भिन्नता है। अतः शब्दादि के '**प्रविभाग**' अर्थात् भेद के विषय में संयम करने में तद्विषयक शब्दादिभेद का साक्षात्कार होने पर योगी को सभी प्राणियों की बोलियों का ज्ञान होता है। जैसे 'यह काकादि पक्षी इस '**अर्थ**' (पदार्थ) का इस प्रकार '**ज्ञान**' करके अमुक '**शब्द**' के द्वारा उसे कह रहा है'—ऐसा अपरोक्षज्ञान योगी को होता है। यद्यपि प्रकृत सूत्र में '**साक्षात्कृते सति**' यह अंश नहीं है तथापि '**संस्कारसाक्षात्करणात्**' (३/१८) इस आगामी सूत्र के द्वारा विषयसाक्षात्कारपर्यन्त संयमजन्य सिद्धियाँ उल्लिखित होने से सिद्धिसूचक सभी सूत्रों में '**संयम**' को साक्षात्कार का द्वार समझना चाहिये। अर्थात् संयम, पदार्थसाक्षात्कार के द्वारा ही, सिद्धिदायक होता है। अत एव भाष्यकार भी अनेक सूत्रों में '**दृक्**' और '**दर्शन**' रूप अर्थ के साक्षात्कार-पर्यन्त संयम की व्याख्या करेंगे। (वर्ण, ध्वनि और पदरूप) तीन प्रकार के '**शब्दों**' के साथ '**अर्थ**' और '**प्रत्यय**' का तथा उन त्रिविध शब्दों का भी परस्पर '**अध्यास**' दिखाने के लिये भाष्यकार शब्दों का ही त्रैविध्य सर्वप्रथम प्रदर्शित करते हैं—'**वागिति**।' '**वर्ण**' '**ध्वनि**' तथा '**पद**' रूप इन तीन प्रकार के शब्दों में से अकारादि वर्णों में ही वागिन्द्रिय प्रवृत्त होती है। अर्थात् वाणी वर्ण को ही विषय करती है। वागिन्द्रियजन्य शब्द '**वर्ण**' ही है, न कि शृङ्गादि शब्द तथा वाचक पद। वागिन्द्रिय के उरस् आदि

1. क ख ग घ च छ—**सूत्रे**।
2. क ग घ च छ—**वर्णः** उपलभ्यते, ख—**वर्णः** नोपलभ्यते।

आठ स्थानों से उत्पन्न होने वाला शब्द '**वर्ण**' है, ऐसा वाक्य है–'**अष्टौ स्थानानि...तालु च** (पाणिनीय शिक्षा १३) अर्थात् 'उर, कण्ठ, शिर, जिह्वामूल, दन्त, नासिका, ओष्ठ तथा तालु–ये आठ वर्णों के उच्चारणस्थान हैं।'

योगवार्त्तिककार उक्त विषय को स्पष्ट करते हुए आगे कहते हैं–

## योगवार्त्तिकम्

**वागिन्द्रियस्य च शरीराद्बहिर्वृत्तिर्नास्ति; अतो न श्रोत्रग्राह्यवक्ष्यमाणशब्दो नापि तदनन्तरं श्रोतृबुद्धिग्राह्यो वाचकशब्दो वागिन्द्रियकार्यः, श्रोतृश्रोत्रदेशे वक्तृवागिन्द्रियासम्बन्धेन श्रोत्र- ग्राह्य-शब्दोत्पादकत्वासम्भवाद् इति। वागिन्द्रियजन्याच्छब्दाच्छब्दान्तरमाह–श्रोत्रं चेति। ध्वनिर्नाम वागिन्द्रियशङ्खादिष्वभिहतस्योदानवायोः परिणामभेदः, येन परिणामेनोदानवायुर्वक्तृदेहादुत्थाय शब्दधारां जनयन् श्रोतृश्रोत्रं प्राप्नोति तस्य ध्वनेः परिणामभूतं वर्णावर्णसाधारणं नादाख्यं शब्दसामान्यमेव श्रोत्रस्य विषयः न तु ध्वन्यपरिणामभूतं वाचकं पदमित्यर्थः। स च शब्दो वर्णजातीयत्वेन वर्ण इत्युच्यते। तृतीयं शब्दमाह–पदं पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यमिति। यथाप्रतीतिसिद्धान्नादाख्यान् गकारादिवर्णान् प्रत्येकं [1]पदमिति गृहीत्वाऽनु पश्चाद्या बुद्धिः संहरति=एकत्वमापादयति, गौरित्येकं पदमिति, तया बुद्ध्या निर्ग्राह्यः वर्णेभ्योऽतिरिक्तमखण्डमेकदैवोत्पद्यमानं वक्ष्यमाणं स्फोटाख्यमिति शेषः। तथा चायं तृतीयः शब्दोऽन्तःकरणस्यैव ग्राह्य इत्यर्थः, तस्य हि पदस्य श्रोत्रग्राह्यत्वेऽनुसंहारबुद्धेरन्तःकरणनिष्ठायाः वैयधिकरण्येन हेतुत्वं स्यात्, तच्चायुक्तम्, सामानाधिकरण्यस्य प्रत्यासत्तितायां लाघवात्। न चानुसंहारबुद्धिरपि श्रोत्रादेरेवास्त्विति वाच्यम्, असम्भवात्। वर्णानां ह्यैक्यापादनमानुपूर्व्यैक्यात्; सा चानुपूर्वी गकारोत्तरौकारादिरूपिणी नानेकवर्णपदेषु श्रोत्रेण ग्रहीतुं शक्यते, आशुविनाशितया वर्णानां मेलनाभावात् पूर्वपूर्ववर्णसंस्काराणां तत्स्मृतीनां चान्तःकरणनिष्ठानामन्तःकरणसहकारित्वमेवोचितम्। अतः स्मृतानां वर्णानां मनसैवानुपूर्वी ग्रहीतुं शक्यत इति भावः। ननु स्फोटाख्यः शब्दः कीदृशः किङ्कारणकः किंप्रमाणक इति? अत्रोच्यते– यथा बीजाङ्कुराद्यनेकावस्थो वृक्षधर्मी क्रमिकाभ्यस्ताभ्योऽतिरिक्तः पल्लवादिरूपाशेषावस्थया व्यज्यते अयमाम्रवृक्षो न वृक्षान्तरमेवंरूपेण, स च बीजादिभ्यो [2]भिन्नाभिन्नः, भेदाभेदयोरनुभवात्; [3]तथैव गकारौकाराद्यनेकावस्थो गौरित्यादिरखण्डः स्फोटशब्दः क्रमिकाभ्यो गकाराद्यवस्थाभ्योऽतिरिक्त आनुपूर्वीविशेषविशिष्टया विसर्जनीयादिरूपचरमावस्थया व्यज्यते इदं गौरिति पदं न तु गौर इतीत्यादिरूपेण। तच्च स्फोटपदं गकारादिवर्णोक्तेभ्यो भिन्नाभिन्नम्, भेदाभेदयोरनुभवात्।**

---

1. क ख ग च छ–**पदमिति** उपलभ्यते, घ–**पदमिति** नोपलभ्यते।
2. क–**भिन्नः**, ख ग घ च छ–**भिन्नाभिन्नः**।
3. क ग घ च छ–**तथा**, ख–**यथा**।

वागिन्द्रिय का शरीर से बाहर व्यापार नहीं होता है, अतः श्रोत्रेन्द्रिय से ग्राह्य वक्ष्यमाण **'शब्द'** और श्रोता की बुद्धि से ग्राह्य **'वाचक'** शब्द वागिन्द्रिय का विषय नहीं होता है। क्योंकि श्रोता के श्रोत्रदेश में वक्ता की वागिन्द्रिय का सम्बन्ध न होने से वागिन्द्रिय में श्रोत्रग्राह्य शब्द की उत्पादकता संभव नहीं है। अर्थात् वागिन्द्रिय श्रोत्रग्राह्य शब्द को उत्पन्न नहीं कर सकती है। भाष्यकार वागिन्द्रिय से जन्य शब्द से भिन्न शब्द का प्रतिपादन करते हैं–**'श्रोत्रं चेति।'** वागिन्द्रिय तथा शंखादियों से प्रहृत (अभिहत) उदानवायु के परिणामविशेष का नाम **'ध्वनि'** है। अर्थात् जब उदानवायु वागिन्द्रिय तथा शंखादियों से टकराती है, तब दोनों के घर्षण से जो आवाज प्रकट होती है उसे **'ध्वनि'** कहते हैं। इस परिणामभेद से उदानवायु वक्ता के देह से उठ कर शब्दवीचि (शब्दतरङ्ग) को उत्पन्न करती हुई श्रोता के श्रोत्रदेश तक पहुँचती है। उक्त ध्वनि का परिणामभूत वर्णावर्णसाधारण **'नादाख्य'** शब्दसामान्य ही श्रोत्र का विषय बनता है, न कि ध्वनि का अपरिणामभूत वाचक पद श्रोत्रग्राह्य होता है। श्रोत्र का विषयीभूत यह शब्द वर्णजाति वाला होने से **'वर्ण'** कहलाता है। भाष्यकार अब तृतीय प्रकार के शब्द को बताते हैं–**'पदं पुनर्नादानुसंहारबुद्धिनिर्ग्राह्य-मिति।'** प्रतीतिसिद्ध (अनुभवसिद्ध) **'नादाख्य'** गकारादि वर्णों में से प्रत्येक वर्ण को पद मानते हुए जो बुद्धि अन्त में **'गौ** यह एक पद है'–इत्याकारक एकत्व का आपादन (ग्रहण) करती है, उस एकत्वापादिका बुद्धि से निर्ग्राह्य पद **'वर्णों से भिन्न'**, एक ही क्षण में उत्पन्न होने के कारण **'अखण्ड'** तथा वक्ष्यमाण **'स्फोट'** संज्ञा वाला होता है। किञ्च यह तृतीय प्रकार का शब्द अन्तःकरण का ही विषय है। अर्थात् वह अन्तः-करण से ही गृहीत होता है। **'स्फोटाख्य'** पद को श्रोत्रग्राह्य (श्रोत्रेन्द्रिय का विषय) मानने पर (**'गौरित्येकं पदम्'** इत्याकारक) 'अनुसंहारबुद्धि' के अन्तःकरणनिष्ठ होने के कारण पद से होने वाली अर्थप्रतीति में वैयधिकरण्येन हेतुता कहनी पड़ेगी, जो कि युक्तिसंगत नहीं है। क्योंकि पद से होने वाली अर्थप्रतीति में पद और अनुसंहारबुद्धि का सामानाधिकरण्य मानने पर लाघव है।

**शङ्का**–यदि **'सामानाधिकरण्य'** ही **'प्रत्यासत्ति'** में हेतु है तो **'अनुसंहारबुद्धि'** को भी श्रोत्रादि का विषय मान लिया जाय?

**समाधान**–ऐसा नहीं कहना चाहिये, क्योंकि यह संभव नहीं है। वर्णों में एकत्वापादन **'आनुपूर्वी'** से होता है। गकारोत्तरवर्त्ती औकारादिस्वरूप वाली यह आनुपूर्वी अनेक वर्णात्मक पदों में श्रोत्र के द्वारा ग्रहण होने योग्य नहीं होती है। अर्थात् **'आनुपूर्वी'** श्रोत्र का विषय नहीं है। क्योंकि **'आशुविनाशी'** (विनाशशील) होने के कारण वर्णों की **'सहावस्थिति'** (एकत्र मिलन) संभव नहीं है। अन्तःकरणनिष्ठ पूर्व-पूर्व वर्णानुभव-

जन्य संस्कार तथा संस्कारजन्य स्मृतियों का सहकारी अन्तःकरण को ही मानना उचित है। अतः '**मन**' के द्वारा ही स्मृत '**वर्णों**' की '**आनुपूर्वी**' ग्रहण होने योग्य है।

**शङ्का**—'**स्फोटाख्य**' शब्द का '**स्वरूप**' क्या है, उसका '**उत्पादक**' कौन है तथा उसके मानने में क्या '**प्रमाण**' है?

**समाधान**—इस पर वार्त्तिककार कहते हैं—जिस प्रकार बीज, अंकुर आदि अनेक अवस्था वाला वृक्ष-धर्मी अपने बीजादि क्रमिक धर्मों से भिन्न (पृथक्) होता हुआ पल्लवादिरूप पूर्ण विकसित अवस्था से अभिव्यक्त होता है। जैसे 'यह आम्र वृक्ष है, दूसरे फल का वृक्ष नहीं है'—इत्यादि रूप से। यह 'वृक्ष-धर्मी' अपने बीजादि धर्मों से पृथक् तथा अपृथक् (भिन्नाभिन्न) उभयरूप है, क्योंकि '**धर्म-धर्मी**' का '**भेदाभेद**' अनुभवसिद्ध है। इसी प्रकार गकार, औकार आदि अनेक (वर्णात्मक) अवस्था वाला '**गौ**' इत्याकारक अखण्डरूप '**स्फोटात्मक**' शब्द क्रमयुक्त गकारादि (वर्णात्मक) अवस्था से भिन्न (पृथक्) होता हुआ वर्णों के पौर्वापर्यरूप आनुपूर्वीविशेष से विशिष्ट होने के कारण विसर्जनीयादि रूप चरमावस्था से अभिव्यक्त होता है। इस अभिव्यक्ति का स्वरूप है—'**इदं गौः**' अर्थात् यह '**गौ**' पद है न कि '**गौरः**' अर्थात् '**गौर**' आदि रूप कोई दूसरा पद। किञ्च यह '**स्फोटात्मक**' पद कथित गकारादि वर्णों से भिन्न भी है और अभिन्न भी है, क्योंकि गकारादि '**वर्ण**' और 'गौ' इस स्फोटात्मक 'पद' का भेदाभेद अनुभवसिद्ध है।

'**स्फोट**' शब्द के अर्थ को स्पष्ट करते हुए वार्त्तिककार आगे कहते हैं—

### योगवार्त्तिकम्

**स च पदाख्यः शब्दोऽर्थस्फुटीकरणात् स्फोट इत्युच्यते। स्फोटशब्दस्य च कारणम् एकप्रयत्नजन्यो ध्वनिविशेषः, प्रयत्नभेदेनोच्चारणे व्यवधाने सत्येकपदव्यवहाराभावात्। गौरित्येकपदमिति व्यवहारस्तु स्फोटे प्रमाणम्, वर्णानामनेकत्वेन तैरेकत्वव्यवहारस्याञ्जस्येनानुपपत्तेः। तथा प्रत्येकवर्णादनुत्पद्यमानस्यार्थप्रत्ययस्य हेतुत्वं च स्फोटे प्रमाणम्। यदि चानुपूर्वीविशिष्टसमूहस्यैकत्वादेकत्वव्यवहारः तेनैव रूपेणार्थप्रत्ययहेतुत्वं च स्वीक्रियते तर्हि संयोगविशेषावच्छिन्नावयवसमूहादेवैकत्वव्यवहारजलाद्याहरणयोरुपपत्त्या घटाद्यवयविमात्रोच्छेदप्रसङ्गः, [1]युक्तिसाम्यात्। नन्वेवं युक्तिसाम्याद्वाक्यमपि स्फोटरूपम् एकैकं स्याद् इति चेत्? बाधकाभावे सतीष्टत्वादिति दिक्।**

1. ख—किं चाऽऽनुपूर्व्या गुरुत्वेन लाघवात्तदर्थोपस्थापकतावच्छेदकतया घटत्वादिरूपा शब्दनिष्ठा जातिः सिध्यति। तदाश्रयतया चाखण्डः सिद्ध्यति स्फोटः। न चाखण्डपदमभ्युपेत्याऽपि तदभिव्यञ्जकतयाऽवश्यमानुपूर्वीकल्पनीयात्। तथा चाऽपरिहार्यमिदं गौरवमिति वाच्यं, फलमुखगौरवत्वेन तस्यादोषत्वात् (युक्तिसाम्यात्—पश्चात्) उपलभ्यते, कं ग घ च छ—किं च...अदोषत्वात् नोपलभ्यते।

यह **'पदाख्य'** शब्द 'अर्थ' को स्फुट करता है अर्थात् अर्थ का प्रत्यायक होता है इसीलिए **'स्फोट'** कहलाता है। **'एकप्रयत्नजन्य'** ध्वनिविशेष स्फोटात्मक शब्द का कारण होता है, क्योंकि प्रयत्नभेद से उच्चारण करने पर व्यवधान होता है, जिससे एकात्मक पद का व्यवहार नहीं किया जा सकता है। 'गौ यह एक पद है'–इत्याकारक व्यवहार ही स्फोटात्मक शब्द के होने में प्रमाण है, क्योंकि अनेक वर्णों से एकत्वव्यवहार सरलता से उपपन्न नहीं होता है। किञ्च प्रत्येक वर्ण से अर्थज्ञान नहीं होता है। अतः अर्थज्ञान के हेतुरूप से भी **'स्फोट'** की सिद्धि होती है।

**शङ्का**–आनुपूर्वीविशिष्ट वर्णसमूह के एक होने से 'यह एक पद है'–इत्याकारक व्यवहार उपपन्न हो जायेगा। अतः आनुपूर्वीविशिष्ट वर्णसमूह को ही अर्थज्ञान का हेतु स्वीकार किया जाय?

**समाधान**–आनुपूर्वीविशिष्ट वर्णसमूह को अर्थप्रत्यायन का हेतु मानने पर संयोगविशेष से अवच्छिन्न जो अवयवसमूह है, उससे ही जब अनन्त अवयवों में एकत्वव्यवहार तथा जलाहरणादि अर्थक्रिया हो जायेगी तो घट आदि अवयविवाद के उच्छेद का प्रसङ्ग आयेगा, जिस युक्ति से आप स्फोट का खण्डन कर रहे हैं।

**शङ्का**–पद को स्फोटरूप मानने में जो युक्ति बताई गई है, उसी युक्ति से एक-एक वाक्य को भी स्फोटरूप मान लिया जाय?

**समाधान**–किसी प्रकार की सैद्धान्तिक बाधा न होने के कारण **'वाक्यस्फोट'** तो हमें मान्य ही है।

सम्प्रति, **'वर्ण'** को **'पद'** नहीं कहते हैं–इस तथ्य को शंकोपस्थापनपूर्वक स्थापित किया जा रहा है–

**योगवार्त्तिकम्**

**भाष्यकारस्तु संक्षेपतो वर्णानां पदत्वं निराकरोति–वर्णा एकेति। अनेकवर्णा एकसमयस्थित्यनर्हत्वात् परस्परं निरनुग्रहात्मानः=असम्बद्धस्वभावाः। अतस्ते पदमसंस्पृश्य पदत्वमप्राप्य अत एवार्थमनुपस्थाप्याविर्भूयैव क्षणात्तिरोभूताश्चेति कृत्वा प्रत्येकमपदस्वरूपा विवेकिभिरुच्यन्त इत्यर्थः। अत्र स्वरूपग्रहणादवस्थाऽवस्थावतोरभेदेन वर्णानां पदत्वं [1]न निराकृतम्। ननु यदि वर्णाः पदस्वरूपा न भवन्ति तर्हि कथमियन्तो वर्णाः क्रमविशेषावच्छिन्ना अस्यार्थस्य वाचका इति लोकैः संकेत्यन्त इत्याशङ्कां परिहरति–वर्णाः पुनरित्यादिना संकेत्यन्त इति पर्यन्तेनेत्येकवाक्येन। अयमर्थः–यद्यपि वर्णाः पदाद् भिन्नास्तथाऽप्यवस्थाऽवस्थावतोरभेदस्यापि सत्त्वादेकैकोऽपि वर्णः पदात्मा पदाभिन्नो भवति बीजाङ्कुरादिरिव वृक्षाभिन्नः। अत एव पदरूपेण सर्वपदार्थाभिधानयोग्यतासम्पन्नः। अत्र हेतुमाह–सहकारीति। पद-**

1. क ग घ च छ–न उपलभ्यते, ख–न नोपलभ्यते।

**भावे सहकारीणि यानि वर्णान्तराणि तत्प्रतियोगित्वात् तत्सम्बन्धित्वाद् अनन्तपदरूपतामिवापन्नो भवति। इवशब्दोऽत्र वैश्वरूप्ययोग्यतामात्रप्रतिपादनार्थः। वैश्वरूप्यप्रकारमाह–पूर्वो गकार उत्तरेणौरिति वर्णद्वयेन गण इत्यादिपदात् व्यावर्त्यते, उत्तरश्च विसर्जनीयः पूर्वेण गौरितिवर्णद्वयेन गौर इत्यादिपदेभ्यो व्यावर्त्य विशेषे गौरिति स्फोटपदेऽखण्डे तादात्म्येनावस्थापितो भवति, इति हेतोरेवंरूपा बहवो वर्णाः क्रमानुरोधिन आनुपूर्वीविशेषसापेक्षाः पदाभेदतोऽर्थसंकेतेनावच्छिन्ना नियमिता भूत्वा सर्वाभिधानसमर्था अपि इयन्त एतावत्संख्यका एते गकारादयो गामेवोपस्थापयन्ति इत्यतस्तु तेन प्रकारेण वर्णमुखेन तत्पदमेवाविवेकतः संकेत्यत इत्यन्वयः। तत्र हेतुर्वाच्यस्य वाचकमिति। पदमेव हि वाच्यस्य वाचकमुपस्थापकम्। अन्यस्यान्यरूपेण संकेते हेतुरेतेषामित्यादिनिर्भास इत्यन्तम्। यः पदाख्यो बुद्धिमात्रग्राह्यः स्फोट एतेषां वर्णानाम् अर्थसंकेतेनावच्छिन्नानां तथा समाप्तो ध्वनिजन्यः क्रम आनुपूर्वीविशेषो येषां तादृशानाम्। एकोऽभिन्न इति पदस्य स्वरूपाख्यानम्। समाप्तो वाक्यार्थः। अयं भावः-यथा संयुक्तं कपालद्वयं जलाहरणहेतुरित्यविवेकतो बालकेभ्य उपदिश्यते, [1]कपालादिभ्यो घटस्य व्यावर्त्तकान्तरासंभवात्; ततश्च बालकः कपालाविवेकेन घटस्यैव जलाहरणहेतुत्वं गृह्णाति, एवमेव स्फोटान्तरव्यावर्त्तनाय वर्णाविवेकेनैव स्फोटे संकेतोपदेशः संकेतग्रहश्च भवतीति न वर्णेषु संकेतताऽनुपपत्तिरिति।**

अधुना भाष्यकार वर्णों के पदत्व का संक्षेपतः निराकरण करते हैं–'**वर्णा एकेति**।' आशुविनाशी अनेक वर्ण एक ही समय (तुल्य क्षण में) अवस्थान के योग्य न होने से परस्पर '**निरनुग्रहात्मा**' अर्थात् असम्बद्ध स्वभाव वाले होते हैं। अतः वर्ण पदत्व से '**असंस्पृष्ट**' रहकर अर्थात् पदत्व को प्राप्त न होकर अत एव '**अर्थ**' को उपस्थापित न करते हुए आविर्भूत होकर ही उसी क्षण तिरोभूत हो जाते हैं। इस प्रकार '**आविर्भूतता**' तथा '**तिरोभूतता**' वाले '**वर्ण**' योगियों द्वारा **अपदस्वरूप**' कहे जाते हैं। यहाँ अवस्था-अवस्थावान् में अभेदविवक्षया अवयवभूत वर्णों में पदत्व की स्वरूपयोग्यता होने के कारण उनके पदत्व का निराकरण नहीं किया गया है।

**शङ्का**–यदि वर्ण पदस्वरूप नहीं हैं तो मनुष्यों द्वारा इस प्रकार का संकेत कैसे किया जाता है कि अमुक क्रमविशेष (सुनिश्चित क्रम) से युक्त इतने वर्ण अमुक अर्थविशेष के वाचक होते हैं?

**समाधान**–उक्त शंका का निराकरण भाष्यकार करते हैं–'**वर्णाः पुनरित्यादिना संकेत्यन्त इति**।' **वर्णाः** पुनः यहाँ से लेकर '**संकेत्यन्ते**' यहाँ तक के एक वाक्य से भाष्यकार पूर्वपक्षी की उपरिनिर्दिष्ट शंका का समाधान करते हैं। वाक्य का अर्थ यह है–यद्यपि वर्ण पद से भिन्न हैं, तथापि '**अवस्था**' और '**अवस्थावान्**' में '**अभेद**' होने से

---

1. क घ च छ–पट०, ख ग–घट०।

प्रत्येक वर्ण भी '**पदात्मा**' अर्थात् पद से अभिन्न उसी प्रकार है जिस प्रकार बीज, अंकुरादि '**वृक्ष**' से अभिन्न होते हैं। अत एव वर्ण पदरूप से '**सर्वपदार्थाभिधान**' अर्थात् अर्थबोधन की क्षमता से युक्त है। भाष्यकार इसमें हेतु उपन्यस्त करते हैं– '**सहकारीति**।' वर्ण के पदभाव (पद बनने) में सहकारीभूत जितने भी दूसरे वर्ण हैं, वे सब उस प्रथम वर्ण के प्रतियोगी अर्थात् सम्बन्धी होते हैं। अतः पद का प्रथम '**वर्ण**' अनन्त '**पदरूपता**' को प्राप्त हुए की भाँति प्रतीत होता है। भाष्यकार ने यहाँ '**इव**' शब्द का प्रयोग वर्णनिष्ठ विविधरूपता की योग्यता के प्रतिपादन के लिये ही किया है। भाष्यकार '**वर्ण**' की '**विश्वरूपता**' की विधा को बताते हैं–'**पूर्वो गकार उत्तरेणौरिति**।' पूर्ववर्ती '**गकार**' उत्तरवर्ती '**औकार**' ऐसे वर्णद्वय के द्वारा '**गण**' इत्यादि पदों से व्यावृत्त (पृथक्) होता है। इसी प्रकार उत्तरवर्ती '**विसर्जनीय**' पूर्ववर्ती '**गौ**' इत्याकारक वर्णद्वय के द्वारा '**गौर**' इत्यादि पदों से व्यावृत्त (पृथक्) होता हुआ '**गौः**' इत्याकारक '**अखण्डात्मक स्फोट**' पद में तादात्म्यसम्बन्ध से अवस्थित रहता है। इस कारण से '**क्रमानुरोधी**' अर्थात् आनुपूर्वीविशेषसापेक्ष वैश्वरूप्य को प्राप्त बहुत से वर्ण पद से अभिन्न अर्थात् अर्थसंकेत से अवच्छिन्न (नियमित) होकर सर्वाभिधान में समर्थ होते हुए भी '**इयन्तः**' अर्थात् इतनी संख्या वाले ये गकारादि वर्ण (सास्नादि-युक्त) गोव्यक्तिरूप अर्थ का बोधन कराते हैं। इस प्रकार अविवेकिजन वर्ण के मुख से ही वर्ण को पदरूप से संकेतित करते हैं। पद ही अर्थ का वाचक है इसमें हेतु है–'**वाच्यस्य वाचकमिति**।' पद ही वाच्य का वाचक अर्थात् उपस्थापक होता है। अन्य का अन्य रूप से संकेत होने में हेतु है–'**एतेषामित्यादि निर्भास इत्यन्तम्**।' भाष्यकार ने '**एतेषाम्**' से लेकर '**निर्भासः**' पर्यन्त पद के भाष्य द्वारा उस हेतु को बतलाया है जिससे अन्य का अन्य प्रकार से बोध होता है। बुद्धिमात्र से ग्राह्य जो '**पदस्फोट**' है, वह अर्थसंकेत से अवच्छिन्न तथा ध्वनिजन्य आनुपूर्वीविशेष से युक्त क्रम जिनका समाप्त हो गया है ऐसे, वर्णों का निर्भास करता है। भाष्य में प्रयुक्त '**एक**' शब्द का अर्थ '**अभिन्न**' है और इससे भाष्यकार ने पद के स्वरूप को व्याख्यात किया है। इस प्रकार भाष्य का वाक्यार्थ समाप्त होता है। तात्पर्य यह है–जिस प्रकार संयुक्त कपालद्वय जलाहरण का हेतु होता है अर्थात् संयुक्त कपालद्वय से जलाहरण- क्रिया निष्पन्न होती है–ऐसा मूढ (अविवेकी) के प्रति उपदेश किया जाता है, क्योंकि कपालादियों से घट का व्यावर्त्तकान्तर संभव नहीं है। अतः जिस प्रकार बालक कपाल से अभिन्न होने के कारण घट को ही जलाहरण का हेतु समझता है उसी प्रकार स्फोटान्तर के व्यावर्त्तन के लिये वर्णों के अविवेक से ही स्फोट में संकेतोपदेश तथा संकेतग्रह होता है। अतः वर्णों में संकेतत्व अनुपपन्न नहीं है।

सम्प्रति, वार्त्तिककार '**संकेतग्रह**' को विश्लेषित करते हैं–

## योगवार्त्तिकम्

**त्रिविधं शब्दं प्रदर्श्येदानीं तेषां मध्यात्संकेतकारणं प्रतिपादयति—तदेकमिति। प्रतीयत इत्यनेनान्वयः। अयमर्थः—यद्यपि तत्पदं स्फोटाख्यम् एकमेव, न तु वर्णवदनेकम्; एकत्वे प्रमाणमेकबुद्धिविषयमिति, तथा वक्तुरेकेनैव प्रयत्नेन ध्वन्यादिद्वारोत्पादितम्; वर्णास्तु प्रयत्न-भेदेनाप्युत्पद्यन्ते; तथाऽभागं निरंशम्, वर्णव्यूहस्तु वनवत् सांशः; तथाऽक्रमम् एकदैवोत्पद्य-मानं न तु वर्णवत् क्रमेण, अत एभिर्हेतुभिर्वर्णभिन्नम्, किञ्च बौद्धं बुद्धिमात्रग्राह्यं तथाऽन्त्यवर्णस्य प्रत्ययरूपव्यापारेणाभिव्यक्तम् वर्णास्तु नैवं तथाऽपि परप्रतिपिपादयिषया-वक्तृभिरभिधीयमानैः श्रोतृभिश्च श्रूयमाणैर्वर्णैरेवंरूपैः सिद्धवत्परमार्थवदन्योन्यसम्प्रतिपत्त्या संवादेन [1]प्रतीयते व्यवह्रियते, न तु वर्णेभ्योऽन्येन रूपेण। तत्र हेतुरनादिवाग्व्यवहार-वासनावशीकृतया लौकिकबुद्ध्येति। अत्राभिधीयमानैरित्यनेन वागिन्द्रियविषयवर्णाविवेकः पदस्येति, श्रूयमाणैरित्यनेन श्रोत्रविषय[2]शब्दाविवेकः पदस्येति बोध्यम्।**

तीन प्रकार के शब्दों को प्रदर्शित करके उनके मध्य से '**संकेत**' के कारणभूत शब्द का प्रतिपादन भाष्यकार करते हैं—'**तदेकमिति**।' इस वाक्य के द्वारा वर्णित '**एक**' पद का '**प्रतीयत इति**' इत्याकारक '**प्रतीयते**' क्रियापद के साथ अन्वय किया जाता है। इसका अर्थ यह है—यद्यपि स्फोटात्मक पद एक ही है, न कि वर्णों की भाँति अनेक। एकबुद्धिविषयत्व ही स्फोट के एकत्व में प्रमाण है और यह स्फोट वक्ता के एक ही प्रयत्न से ध्वन्यादि द्वारा उत्पन्न होता है, जब कि वर्ण तो प्रयत्नभेद से भी उत्पन्न होते हैं। यह स्फोटात्मक पद '**अभाग**' अर्थात् निरवयव (अंशरहित) है, जब कि वर्णसमूह तो वन की भाँति '**सांश**' अर्थात् सावयव है। यह पदात्मक स्फोट '**अक्रम**' अर्थात् एक काल में ही उत्पन्न होने वाला है, न कि वर्ण की भाँति क्रमशः। इन हेतुओं से '**पदस्फोट**' वर्ण से भिन्न कहलाता है। किञ्च स्फोट '**बौद्ध**' अर्थात् बुद्धिमात्र से ग्राह्य होता है तथा पदगत अन्तिम वर्ण के प्रत्ययरूप व्यापार के द्वारा अभिव्यक्त होता है, किन्तु वर्ण ऐसे नहीं होते हैं। तथापि (पदस्फोट से वर्ण के अभिन्न न होने पर भी) दूसरों के प्रति प्रतिपादन करने की इच्छा से वक्ता के द्वारा बोले गये तथा श्रोता के द्वारा सुने गये एवं रूप अर्थात् आनुपूर्वीविशिष्ट वर्णों के द्वारा यह स्फोटरूप पद '**सिद्धवत्**' अर्थात् परमार्थवत् अर्थात् नित्य स्थित के समान '**सम्प्रतिपत्ति**' अर्थात् सदृश व्यवहार चलने की परम्परा के कारण अर्थात् संवाद के कारण व्यवहार किया जाता है अर्थात् अनुभूत होता है, न कि वर्णों से पृथक् रूप से। वर्णों से अभिन्न रूप से पदस्फोट की प्रतीति में कारण यह है—'**अनादिवाग्व्यवहार-वासनावशीकृतया लौकिकबुद्ध्येति**।' अर्थात् अनादिकालिक वाग्व्यवहार (बात करने

---

1. क—**प्रलीयते**, ख ग घ च छ—**प्रतीयते**।
2. क ग घ च छ—**शब्द**०, ख—**वर्ण**०।

तथा सुनने) की वासना से अनुप्राणित लोगों की बुद्धि के कारण यह पदस्फोट परमार्थवत् समझा जाता है। भाष्य में '**अभिधीयमानैः**' पद के द्वारा भाष्यकार ने यहाँ '**पद**' का वागिन्द्रिय के विषयभूत वर्ण से अभेद (अविवेक) बताया है तथा '**श्रूयमाणैः**' पद के द्वारा '**पद**' का श्रोत्रेन्द्रिय के विषयभूत शब्द से अभेद (अविवेक) बताया है।

सम्प्रति, शब्दव्यवहार की '**संकेतग्रहमूलकता**' को विश्लेषित किया जा रहा है–

## योगवार्त्तिकम्

**तदेवं त्रिविधशब्दानामन्योन्याध्यासात्सङ्करो दर्शितः। इदानीं त्रिविधशब्देनार्थप्रत्यययोरध्यासं प्रतिपादयितुं शब्दव्यवहारस्य संकेतग्रहमूलकत्वमाह–तस्येति। तस्य पदस्य प्रविभागो विषयव्यवस्था संकेतग्रहादेव भवति। प्रविभागमेवाह–एतावतामिति। एतावतां वर्णानाम् एवंजातीयक एवमानुपूर्वीकोऽनुसंहारो मिलनमेतस्यार्थस्य वाचक उपस्थापक इत्येवंरूपो विभाग इत्यर्थः। एकस्यार्थस्येति पाठेऽर्थ[1]विशेषस्येत्यर्थः। संकेतशब्दार्थमाह–संकेतस्त्विति। अध्यासः संकेतकर्त्तुराहार्यारोपः, आरोपिताभेद इति यावत्। तस्यैव च ज्ञानं पदार्थोपस्थापकम्। तत्राधुनिकनामादिकल्पनाव्यावर्त्तनाय स्मृत्यात्मक इति। विषयविषयिणोरभेदात् पाणिन्यादिस्मृत इत्यर्थः। न च कल्पिताभेदस्यासतः कथंसंकेतत्वमिति वाच्यम्, असत्ख्यात्यनभ्युपगमेनान्यत्र सत एवाभेदस्यान्यत्र कल्पनादिति। अध्यासस्य संकेतत्वे प्रमाणमाह–योऽयं शब्द इत्यादिना भवतीत्यन्तेन। ओमित्येकाक्षरं ब्रह्मेत्यादिशास्त्रेषु, कम्बुग्रीवादिमान् घट इत्यादिर्लोके च पदपदार्थयोरभेदारोप एव संकेतो दृश्यत इत्यर्थः, ओमित्यादिशब्दवाच्यत्वलक्षणायां प्रमाणाभावादिति। अत एव कोशेषु अमरा निर्जरा देवा इत्यादिना शब्दार्थयोरारोप्यमाणाभेद एव संकेतो दृश्यत इति। अत एवैतेनानाद्यभेदारोपेणागमिनो मन्त्रार्थयोरभेदोपासनामुपदिशन्ति, मीमांसकाश्च मन्त्रमयीं देवतामाहुः। या त्वस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वं [2]शक्तिरिति तन्त्रान्तरे [3]लक्षिता साऽप्रामाणिकी लक्षणाऽदिसाधारणी च। अपि चेश्वरमजानतोऽपि शब्दार्थप्रत्ययो दृश्यते, तथा पदपदार्थयोरभेदेन संकेतोऽपि न युज्येतेत्यादिदोषो बोध्यः। इदानीमुक्तसंकेतबुद्धिनिमित्तकः त्रयाणां [4]संकेत**

---

1. ख–**अत्र संकेतशक्तिग्राहकत्ववचनाच्छक्तिरतिरिक्तः पदार्थः। तस्य वाचकः प्रणव इति सूत्रे च संकेतस्य शक्तिग्राहकत्वमेव भाष्यकृतोक्तं न च संकेतेनोपपत्तौ शक्तिर्व्यर्था देवदत्तादिशब्दानामिव प्रणवादीनामपि संकेतभेदेनानर्थव्यवस्थापत्तिरिति** (**विशेषस्येत्यर्थः**–पश्चात्) उपलभ्यते, क ग घ च छ–**अत्र...पत्तिरिति** नोपलभ्यते।
2. ख–**अस्येदं वाचकमिति संकेतस्तु तद्ग्राहक इति** (**शक्तिः**–पश्चात्) उपलभ्यते, क ग घ च छ–**अस्य...इति** नोपलभ्यते।
3. क ख ग घ–**कल्पना**, च छ–**लक्षिता**।
4. क ग घ च छ–**संकेतः**, ख–**संकरः**।

**इत्याह—एवमेत इति। एवं संकेतबुद्धेः कारणाद् एते त्रिविधाः शब्दा अर्थप्रत्ययौ च सङ्कीर्णावविविक्तौ च। तत्र संकेतग्रह एव शब्दार्थयोरितरेतराध्यासः, शब्दार्थयोस्तु प्रत्ययेन सहैकाकारत्वादन्योन्याध्यासः प्रसिद्ध एवेति भावः। संकराकारमाह—गौरिति। य इति। स एव शब्दादीनां तत्त्वज्ञो नान्य इत्यर्थः।**

इस प्रकार वर्ण, ध्वनि तथा पद रूप तीन प्रकार के शब्दों का परस्पर (संकेतरूप) अध्यास होने से विवेकाग्रहरूप '**सङ्कर**' को प्रदर्शित किया गया। सम्प्रति, त्रिविध '**शब्द**' के साथ '**अर्थ**' तथा '**प्रत्यय**' (ज्ञान) का '**अध्यास**' प्रतिपादित करने के लिये भाष्यकार 'शब्दव्यवहार संकेतग्रहमूलक होता है', इस अर्थ की व्याख्या करते हैं—'**तस्येति**।' उस पद के विषयों की पृथक्-पृथक् व्यवस्था (प्रविभाग) संकेतग्रह से ही होती है। पद के '**प्रविभाग**' अर्थात् विषय-व्यवस्था को ही भाष्यकार इस प्रकार बताते हैं—'**एतावतामिति**।' इतने निश्चित (न कि अनिश्चित) वर्णों की '**एवं जातीयक**' अर्थात् इस प्रकार की आनुपूर्वी (पौवापर्य) वाला '**अनुसंहार**' अर्थात् एकत्वबुद्धि इस अर्थ की वाचक अर्थात् उपस्थापक होती है—इत्याकारक विषय-व्यवस्था (प्रविभाग) की जाती है। भाष्य में जहाँ-कहीं '**एतस्यार्थस्य**' के स्थान पर '**एकस्यार्थस्य**' ऐसा पाठभेद मिलता है वहाँ इस पद का '**अर्थविशेष**' अर्थ किया जाता है। भाष्यकार '**संकेत**' शब्द का अर्थ बताते हैं—'**संकेतस्त्विति**।' संकेतकर्त्ता का आहार्यारोप '**अध्यास**' कहलाता है। '**आहार्यारोप**' आरोपित अभेद को कहते हैं। (इस प्रकार यहाँ शब्द और अर्थ के बीच होने वाले अन्योन्याध्यास को आहार्यारोप कहा गया है)। इस आरोपित अभेद का ही ज्ञान पदार्थ का उपस्थापक (अभिधायक) होता है। आधुनिक नामादि कल्पना की व्यावृत्ति के लिये भाष्यकार ने '**स्मृत्यात्मकः**' पद का प्रयोग किया है। पद-पदार्थ-विषयक '**संकेत**' स्मृत्यात्मक होता है, क्योंकि विषय-विषयी का अभेद पाणिनि आदि शास्त्रों में स्मृत है।

**शङ्का**—कल्पित अभेद तो असद्रूप है। अतः असद्रूप कल्पित अभेद कैसे संकेत का कारण हो सकता है?

**समाधान**—ऐसा नहीं कहना चाहिये, क्योंकि (असत्ख्यातिवादी तो हम हैं नहीं, हम तो अन्यथाख्यातिवादी हैं) असत्ख्याति को स्वीकार न करने पर अन्यत्र सद्रूप अभेद की अन्यत्र कल्पना की जा सकती है। '**संकेत**' में शब्द और अर्थ का '**इतरेतराध्यास**' होता है, इस तथ्य को भाष्यकार प्रमाणित करते हैं—'**योऽयं शब्द इत्यादिना भवतीत्यन्तेन**।' '**ओमित्येकाक्षरं ब्रह्म**' (गीता ८/१३) अर्थात् '**ओम्**' यह एकाक्षर ब्रह्म है'—इत्यादि शास्त्रों में तथा '**कम्बुग्रीवादिमान् घटः**' अर्थात् 'घट कम्बुग्रीवादिमान् है'—इत्यादि लोक में '**पद**' तथा '**पदार्थ**' का अभेदारोपात्मक '**संकेत**' (जो यह शब्द है वह यह अर्थ है और जो यह अर्थ है वह यह शब्द है—इस प्रकार शब्द में अर्थ और

अर्थ में शब्दबुद्धिरूप परस्पराध्यासात्मक संकेत) ही परिलक्षित होता है, क्योंकि **'ओम्'** इत्यादि शब्द में वाच्यत्वपरक लक्षणा करने में कोई प्रमाण नहीं है। अत एव कोशग्रन्थों में **'अमरा निर्जरा देवा'** (१/१/२) अर्थात् देव के अमर, निर्जर पर्याय हैं– इत्यादि से शब्द और अर्थ के आरोप्यमाण **'अभेद'** में **'संकेत'** दिखलाई पड़ता है। अत एव शब्द और अर्थ में अनादि अभेद का आरोप होने से ही आगमिक अर्थात् वेदवेत्ता मंत्र और अर्थ की अभेदोपासना का उपदेश करते हैं और मीमांसक लोग मन्त्रमयी (शब्दमयी) देवता को कहते हैं। किञ्च न्यायशास्त्र में **'अस्माच्छब्दादयमर्थो बोद्धव्यः'** अर्थात् 'इस शब्द से यह अर्थ जाना जाय'–एवंविधा शक्ति को ईश्वरेच्छा के विषयरूप से जो लक्षित किया गया है, वह अप्रामाणिकी तथा लक्षणादि-साधारणी है। किञ्च ईश्वर को न जानने वाले को भी शब्दार्थप्रत्यय होता है और (न्यायमतानुसार) पद-पदार्थ में अभेदविधया **'संकेत'** भी नहीं बन सकेगा–इत्यादि दोष सूच्य हैं। अधुना, उक्त संकेतबुद्धिनिमित्तक शब्द, अर्थ और ज्ञान इन तीनों के इतरेतराध्यासरूप **'संकेत'** को भाष्यकार बताते हैं–**'एवमेत इति।'** इस प्रकार संकेतबुद्धि के कारण ये तीन प्रकार के वर्ण, ध्वनि तथा पद रूप **'शब्द'**, **'अर्थ'** तथा **'ज्ञान'** 'अविविक्त' अर्थात् **'संकीर्ण'** हो जाते हैं। इनमें से **'संकेतग्रह'** होने पर ही **'शब्द'** और **'अर्थ'** का **'अन्योन्याध्यास'** होता है किन्तु शब्दार्थ का प्रत्यय के साथ एकाकारत्व होने से जो **'इतरेतराध्यास'** होता है, वह तो प्रसिद्ध ही है। भाष्यकार अध्यासप्रयुक्त संकीर्णता के प्रकार को बताते हैं–**'गौरिति।'** अर्थात् 'गो' यह **'शब्द'** है, 'गो' यह **'अर्थ'** है तथा 'गो' यह **'ज्ञान'** है। शब्दार्थज्ञान की अविविक्तता की प्रतीति अविवेकिजन को होती है, न कि विवेकिजन को भी, इसी तथ्य को भाष्यकार कहते हैं–**'य इति।'** जो व्यक्ति शब्द, अर्थ और ज्ञान के विभाग को जानता है वही तत्त्वज्ञ है, अन्य व्यक्ति नहीं।

सम्प्रति, योगवार्त्तिककार पद और वाक्य तथा उनके अर्थों के सांकर्य की व्याख्या प्रस्तुत करते हैं–

### योगवार्त्तिकम्

**वर्ण[1]ध्वनिपदानामन्योन्यसंकरवदिदानीं पदवाक्ययोस्तदर्थयोश्च सङ्करेणापि शब्दार्थ-प्रत्ययानां सङ्करं दर्शयति–सर्वपदेष्विति। वाक्यशक्तिः पदार्थान्तरसहकारेण [2]वाक्यभवन-शक्तिः। तथा [3]च वृक्ष इत्यादिपदानां वृक्षोऽस्ति वृक्षश्चलति वृक्षश्छिद्यत इत्यादिवाक्यै**

1. ख ग–**परिणाम०** (**ध्वनि०**–पश्चात्) उपलभ्यते, क घ च छ–**परिणाम०** नोपलभ्यते।
2. क ग घ च छ–**वाक्यभवनशक्तिः**, ख–**वाक्यार्थबोधजननशक्तिः**।
3. ख–**अर्थाभेदात्** (**च**–पश्चात्) उपलभ्यते, क ग घ च छ–**अर्थाभेदात्** नोपलभ्यते।

सङ्करोऽविवेक इति भावः। पदेषु **वाक्यशक्तिमुदाहरति–वृक्ष इत्युक्त इति। वृक्ष इत्युक्ते सत्याकाङ्क्षापूरणार्थं योग्यताऽऽदिवशादस्तीति शब्दो गम्यतेऽध्याह्रियत इत्यर्थः।** [1]**तथा च पदे** वाक्यसंकर इति भावः। [2]**ननु शब्दाध्याहारो न संभवति, एकस्मिन्नेवार्थे शब्दानामानन्त्यात् शब्दविशेषानुमापकलिङ्गाद्यनुपस्थितेरि**[3]**ति चेत्? न; स्वेच्छया स्वयं कल्पितेन केनाप्याकाङ्क्षा-पूरकशब्देन वक्तृतात्पर्यविषयार्थ**[4]**बोधसम्भवात्। अर्थविशेषानुमाने तु योग्यताऽऽकांक्षातात्पर्या-दिकमेव** लिङ्गमस्ति। एतदेवाह–**न सत्तामिति। योग्यताप्रदर्शनेनाकांक्षातात्पर्यादयोऽप्युप-**लक्षिताः, केवलयोग्यताया **अर्थान्तरसाधारण्यादिति।** उदाहरणान्तरमाह–**तथा न हीति।** आक्षेपोऽनुमानम्। **नन्वेवं** कारकवाचकपदानां **कुत्रापि प्रयोगो न स्यादित्यत्राह–नियमार्थ इति। योग्यताऽऽदिभिः सर्वत्रार्थविशेषानुमानं न सम्भवति, अतः** कारकाणां **सामान्यतोऽनुमिताना-मपि नियमार्थः** कारकान्तरव्यावृत्त्यर्थश्चैत्रोऽग्निना [5]**भर्जनमित्यादिपदैश्चैत्राग्निभर्जनानां कर्तृ-**करणकर्मणामनुवाद **इत्यर्थः।**

वर्ण, ध्वनि और पदों के अन्योन्य संकर की भाँति सम्प्रति '**पद**' और '**वाक्य**' के तथा उनके '**अर्थों**' के '**सांकर्य**' से भी शब्द, अर्थ और प्रत्यय में होने वाली संकीर्णता को भाष्यकार प्रदर्शित करते हैं–'**सर्वपदेष्विति।**' सभी पदों में अन्य पदों की सहायता से वाक्यनिर्माण की शक्ति निहित है। जैसे '**वृक्षः**' इत्यादि पदों का '**वृक्षोऽस्ति**', '**वृक्षश्चलति**', '**वृक्षश्छिद्यते**' अर्थात् 'वृक्ष है', 'वृक्ष चल रहा है', 'वृक्ष कट रहा है'– इत्यादि वाक्यों के साथ '**संकर**' अर्थात् विवेकाग्रह होता है। भाष्यकार पदों में वाक्य-शक्ति का उदाहरण प्रस्तुत करते हैं–'**वृक्ष इत्युक्त इति।**' 'वृक्ष' ऐसा कहने पर आकांक्षा के निवृत्त्यर्थ योग्यतादि (योग्यता तथा आसत्ति) के कारण '**अस्ति**' अर्थात् 'है'–इत्या-कारक क्रियापद का अध्याहार किया जाता है। इस प्रकार पद में वाक्य का '**संकर**' अर्थात् अविभाग होता है।

**शङ्का**–शब्द का अध्याहार करना संभव ही नहीं है, क्योंकि एक ही अर्थ के वाचक एकाधिक शब्द होने से किसी शब्दविशेष का अध्याहार करने में अनुमापक लिङ्ग आदि का अभाव रहता है? अर्थात् अर्थविशेष में तात्पर्यग्रह होने पर भी उसी अर्थ वाले पदों के अनन्त होने से किसी शब्दविशेष का अध्याहार करने में कोई मापदण्ड नहीं रहता है?

---

1. क ग घ च छ–**तथा च पदे वाक्यसंकर इति भावः**, ख–**पचतीत्युक्ते सर्वकारकाणामाक्षेप इति वक्ष्यमाणादर्थाध्याहार एवाचार्याभिप्रेतः।**
2. क ग घ च छ–**ननु**, ख–**यतः।**
3. क ग घ च छ–**इति चेन्न** उपलभ्यते, ख–**इति चेन्न** नोपलभ्यते।
4. क ग घ च छ–**बोधसम्भवात्**, ख–**बोधस्वीकारे तु कल्पनागौरवः।**
5. क ग घ च छ–**भर्जनमित्यादिपदैश्चैत्राग्निभर्जनानां कर्तृकरणकर्मणां**, ख–**तण्डुलानित्यादिकपद-श्चैत्राग्निकरणकर्मणाम्।**

**समाधान**–ऐसी बात नहीं है, क्योंकि अपनी इच्छा से स्वकल्पित किसी भी आकांक्षा-पूरक शब्द के अध्याहार द्वारा वक्तृतात्पर्य के विषयभूत अर्थ का ज्ञान हो सकता है। किञ्च अर्थविशेष का अनुमान कराने में तो योग्यता, आकांक्षा तथा तात्पर्य आदि ही **'लिङ्ग'** होते हैं। इसी बात को भाष्यकार कहते हैं–**'न सत्तामिति।'** पदार्थ सत्ता से व्यभिचरित नहीं होता है। **'पदार्थ'** में अस्तित्वरूप योग्यता के प्रदर्शन (अभिधान) से आकांक्षा, तात्पर्य आदि भी उपलक्षित होते हैं, क्योंकि केवल योग्यता तो अर्थान्तर में भी समानरूप से रहने वाली होने से वह अर्थविशेष का अनुमान कराने में समर्थ नहीं होती है। पद में वाक्यशक्ति को परिपुष्ट करने के लिये भाष्यकार दूसरा उदाहरण प्रस्तुत करते हैं–**'तथा न हीति।'** ऐसे ही साधन के विना क्रिया की निष्पत्ति नहीं हो सकती है। अर्थात् क्रियापद के श्रवण के पश्चात् साधनबोधक पद का अध्याहार किया जाता है। भाष्य में प्रयुक्त **'आक्षेप'** शब्द का अर्थ **'अनुमान'** है। जैसे **'पचति'** कहने पर सभी कारक आक्षिप्त अर्थात् अनुमित होते हैं। अर्थात् क्रिया को कर्त्ता, कर्म आदि कारकों की आकांक्षा होती है।

**शङ्का**–यदि क्रियापद का प्रयोग होने पर सभी कारकों के आक्षेप की बात कही जाय तो कारकवाचक पदों का कहीं भी प्रयोग नहीं हो सकेगा?

**समाधान**–इस पर भाष्यकार कहते हैं–**'नियमार्थ इति।'** योग्यता आदि से सर्वत्र अर्थ-विशेष का अनुमान तो संभव नहीं है। अतः सामान्यरूप से अनुमित कारकों को भी **'नियमार्थ'** अर्थात् विशेषातिरिक्त कारकान्तरों से व्यावृत कराने के लिये **'चैत्रोऽग्निना भर्जनम्'** इत्यादि पदों के द्वारा कर्त्ता, करण और कर्मरूप चैत्र, अग्नि तथा भर्जन (भूनने की क्रिया के रूप कर्म) का अनुवाद किया जाता है।

**बालप्रिया**–

**'कारकान्तरव्यावृत्त्यर्थः...अनुवादः'**–भावार्थ यह है–नियमन का अर्थ होता है–परिसीमित करना या अन्य व्यावर्तन करना। **'चैत्रः'** पद के कथन से **'पचति'** क्रिया का कारकत्व प्रकट नहीं होता है, प्रत्युक्त चैत्र में कर्तृत्व का परिसीमन और मैत्र, देवदत्तादि के कर्तृत्व का व्यावर्तन होता है। अतः अर्थविशेष के ज्ञान के लिये क्रियापद से अतिरिक्त कारकान्तरों का प्रयोग सार्थक एवं स्वाभाविक है। इस प्रकार पूर्वपक्षी की यह आशंका निरस्त हो जाती है कि क्रियापद के प्रयोग से ही सभी कारकों के आक्षेपलभ्य हो जाने से कारकवाचक पदों का प्रयोग व्यर्थ है।

सम्प्रति, **'पद'** और **'वाक्य'** के **'सांकर्य'** को विश्लेषित किया जा रहा है–

**योगवार्त्तिकम्**

**इदानीमध्याहारं विनाऽपि पदवाक्ययोः सङ्करमर्थाभेदनिमित्तकं दर्शयति–दृष्टश्चेति।**

छन्दोऽधीत इति वाक्यस्यार्थे श्रोत्रिय इति पदस्य; तथा प्राणान् धारयतीति वाक्यस्यार्थे जीवतीति पदस्य च वचनमित्यर्थः,

जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते॥

इतिस्मृतेः, जीव बलप्राणधारणयोरित्यनुशासनाच्चेति। [1]ननु यदि वाक्यार्थप्रतिपत्तिः पदादपि भवति, तर्हि गुरुतरस्य छन्दोऽधीत इति वाक्यस्य वचनं कदाऽपि न स्यादित्याशङ्कायामाह—तत्र वाक्य इति। अत एव पदवाक्ययोः साङ्कर्यात् संशयस्थले पदं वाक्येन विवरणीयमिति। प्रसङ्गादाह—तत इति। यतो वाक्यार्थेऽपि पदरचना भवति; अतः संदेहस्थले पदमंशभेदैर्वाक्येन विवरणीयमित्यर्थः। [2]अव्याकरणेऽर्थाप्रत्ययाद्वाक्यव्यवहरणमेव व्यर्थं स्यादित्याह—अन्यथेति। भवतीति प्रयुक्ते नामाख्यातयोः सारूप्याद्भवति घटो भवति भिक्षां देहीत्यर्थद्वयसंदेहेऽनवधारितं पदं कथं किमर्थं क्रियायां कारके वा [3]व्याक्रियेत, श्रोतुरर्थप्रत्ययासंभवात्, एवमश्व इति प्रयुक्ते गतिमकार्षीर्घोटको वेति संशयो नामाख्यातसारूप्यात्, तथाऽजापय इति प्रयुक्ते छाग्याः पयः शत्रून् पराभावितवान्वेत्यर्थसंशयो नामाख्यातसारूप्याद् इत्यर्थः।

अधुना, दूसरे पद का अध्याहार किये विना भी पद और वाक्य के अर्थ की समानता के आधार पर होने वाले (अर्थाभेदनिमित्तक) **'सांकर्य'** अर्थात् इतरेतराध्यास को भाष्यकार प्रदर्शित करते हैं—**'दृष्टश्चेति।'** जैसे **'छन्दोऽधीते'** अर्थात् 'छन्द पढ़ता है'—इस वाक्यार्थ में **'श्रोत्रियः'** पद का अध्याहार किया जाता है तथा **'प्राणान् धारयति'** अर्थात् 'प्राणों को धारण करता है'—इस वाक्यार्थ में **'जीवति'** पद का अध्याहार किया जाता है। इस विषय में **'जन्मना...उच्यते'** (अत्रिसंहिता १४०) अर्थात् 'व्यक्ति जन्म से 'ब्राह्मण' कहलाता है' संस्कार से 'द्विज' कहा जाता है और विद्या से 'विप्रत्व' को प्राप्त करता है तथा तीनों से 'श्रोत्रिय' कहलाता है'—ऐसी

---

1. क ग घ च छ—ननु यदि वाक्यार्थप्रतिपत्तिः पदादपि भवति, तर्हि गुरुतरस्य छन्दोऽधीत इति वाक्यस्य वचनं कदापि न स्यादित्याशङ्कायामाह—तत्र वाक्य इति। अत एव पदवाक्ययोः साङ्कर्यात् संशयस्थले पदं वाक्येन विवरणीयमिति। प्रसङ्गादाह—तत इति। यतो वाक्यार्थेऽपि पदरचना भवति, अतः संदेहस्थले पदमंशभेदैर्वाक्येन विवरणीयमित्यर्थः।
   ख—ननु पदवाक्ययोरेकार्थत्वे श्रोत्रियश्छन्दोऽधीत इत्येवं विधेषु वाक्येषु पौनरुक्त्यं स्यात्तत्राह—तत्र वाक्य इति। यतस्तत्र वाक्ये श्रोत्रियश्छन्दोऽधीत इत्यादौ श्रोत्रियपदतदर्थयोर्वाच्यवाचकभावेनाभिव्यक्तिर्भवति। ततस्तस्माच्छ्रोत्रियं ब्रह्मनिष्ठमित्यादिवाक्यतः श्रोत्रियादिपदं प्रविभज्य यथोक्तवाक्यैर्व्याख्यातृभिर्व्याख्येयमित्यतो न पौनरुक्त्यमित्यर्थः। अत्र पदमनुद्य सामानाधिकरण्येनार्थविवरणादपि शब्दार्थयोः सङ्करश्च दर्शित इति।
2. ख—अर्थद्वयसंशयस्थलेषु पद०—(अव्याकरणे—प्राक्) उपलभ्यते, क ग घ च छ—अर्थ...पद० नोपलभ्यते।
3. ख ग—प्रयुज्येत (व्याक्रियेत—पश्चात्) उपलभ्यते, क घ च छ—प्रयुज्येत नोपलभ्यते।

स्मृति तथा '**जीव बलप्राणधारणयोः**'—अर्थात् 'बल और प्राण को धारण करने से 'जीव' कहलाता है—ऐसा अनुशासन (धातुपाठ) प्राप्त होता है।

**शङ्का**—यदि पद से भी वाक्यार्थज्ञान होता है तो **श्रोत्रियः** पद के स्थान पर '**छन्दोऽधीते**' इस गौरवपूर्ण वाक्य का प्रयोग कभी न हो सकेगा?

**समाधान**—उक्त आशंका होने पर भाष्यकार कहते हैं—'**तत्र वाक्य इति**।' पद और वाक्य में से वाक्य द्वारा पद के अर्थ का प्रकाशन होता है। अत एव पद और वाक्य का सांकर्य होने पर संशय के स्थल में वाक्य के द्वारा पद को विवृत करना चाहिये। अर्थात् वाक्य के द्वारा व्युत्पादित पद व्याख्यान के योग्य होता है। भाष्यकार प्रसङ्गवश आगे कहते हैं—'**तत इति**।' चूँकि वाक्यार्थ में भी पद-रचना होती है अर्थात् सम्पूर्ण वाक्य का अर्थ एक पद के द्वारा भी अभिहित होता है, इसलिये पद के अर्थ के विषय में सन्देह होने पर (प्रकृति-प्रत्ययरूप) अंशभेदों से युक्त पद का वाक्य के द्वारा विवरण करना चाहिये। पद के अर्थ को प्रकृति-प्रत्यय द्वारा विश्लेषित न करने पर अर्थात् पद-पृथक्करण-प्रक्रिया का प्रयोग न करने पर पदार्थ- ज्ञान (पद के अर्थ का बोध) न होने से (पद के अर्थबोध के लिये) वाक्य का व्यवहार (प्रयोग) करना ही व्यर्थ हो जायेगा। इस तथ्य को भाष्यकार इस प्रकार बताते हैं—'**अन्यथेति**।' ऐसा न करने पर '**भवति**' इस प्रयोग में '**नाम**' और '**आख्यात**' की समानता होने से (भू+लट् प्रथमपुरुष एकवचन में तथा 'भवत्' शब्द से सम्बोधन के एक वचन में '**भवति**' पद निष्पन्न होने से) '**घटो भवति**' तथा '**भवति भिक्षां देहि**'—इन दो वाक्यों में प्रयुक्त '**भवति**' पद के अर्थद्वय के विषय में सन्देह होने पर यह अनवधारित=अनिर्णीत पद क्रियारूप अथवा कारकरूप में से किस रूप में व्याख्यात किया जाय? ऐसा सन्देह बना रहता है। अन्यथा श्रोता को अर्थज्ञान होना संभव न हो सकेगा। इसी प्रकार '**अश्वः**' कहने पर '**नाम**' और '**आख्यात**' की समानता होने से (श्वस् प्राणने+लुङ् मध्यमपुरुष एकवचन में तथा 'अश्व' शब्द से प्रथमा विभक्ति एकवचन में '**अश्वः**' पद निष्पन्न होने से) '**अश्वस्त्वम्**' तथा '**अश्वो धावति**' इन दो वाक्यों में प्रयुक्त '**अश्वः**' पद के अर्थद्वय 'साँस ली' अथवा 'घोड़ा है'—के विषय में सन्देह होता है। इसी प्रकार '**अजापयः**' इस प्रयोग में '**नाम**' और '**आख्यात**' की समानता होने से (जय्+णिच् लङ् मध्यमपुरुष एकवचन में तथा '**अजायाः पयः**' द्वितीया विभक्ति के एकवचन में '**अजापयः**' पद निष्पन्न होने से) '**अजापयः शत्रून्**' तथा '**अजापयः पिब**' इन दो वाक्यों में प्रयुक्त '**अजापयः**' पद के अर्थद्वय 'शत्रुओं को पराजित कराया' तथा 'बकरी का दूध पीना चाहिये'—के विषय में सन्देह होता है। (अतः पद से वाक्यार्थज्ञान होने पर भी वाक्य-प्रयोग निरर्थक नहीं रहता है)।

सम्प्रति, वार्त्तिककार शब्द-अर्थ-ज्ञान के '**प्रविभाग**' पक्ष का विश्लेषण करते हैं—

### योगवार्त्तिकम्

तदेवं शब्दार्थप्रत्ययानां सङ्करं प्रदर्श्येदानीं प्रविभागं दर्शयति–तेषामित्यादिना। तत्रादौ शब्दभेदेऽप्यर्थप्रत्यययोरभेदेन शब्दार्थयोर्भेदं दर्शयति–श्वेतत इत्यादिना प्रत्ययश्चेत्यन्तेन। क्रिया साध्यरूपोऽर्थो यस्य स क्रियाऽर्थः। श्वेतत इतिशब्द; तथा कारकः सिद्धरूपोऽर्थो यस्य स कारकार्थः, श्वेत इति शब्दः, एतौ शब्दौ भिन्नौ, एतयोरर्थस्तु क्रियाकारकरूप एक एव श्वेतगुणमात्रः, एवं प्रत्ययोऽपि। क्रियाकारकात्मक[1]गुणाकारत्वे प्रमाणं पृच्छति–कस्मादिति। उत्तरम्–सोऽयमित्यभिसम्बन्धादिति। श्वेतनं या क्रिया सोऽयं श्वेतरूपः कारको गुणो यश्च श्वेतत इत्यस्मात् श्वेताकारप्रत्ययः सोऽयं श्वेत इत्यस्मादपि श्वेताकारः प्रत्यय इत्यभेद-प्रत्यभिज्ञानादित्यर्थः। कथं तर्ह्यभेदेन शब्दार्थयोः संकेत इति? तत्राह–एकाकार इति। एकाकार आरोपरूपः प्रत्यय एव संकेतः, आरोपिताभेद एव संकेतो न तु पारमार्थिकाभेदरूप इत्यर्थः। ननु शब्दार्थयोरभेदप्रत्ययेन प्रत्यभिज्ञैव कथं न बाध्यते? तत्राह–यस्त्विति। यस्तु श्वेतोऽर्थः [2]शब्दप्रत्यययोर्विषयत्वात् स्वाभिः शब्दादिव्यावृत्ताभिरवस्थाभिर्नवपुराणादिभि[3]र्विक्रियमाण-त्वाच्च न शब्दप्रत्यययोः सहगतो न कालतः सहचरो वैयधिकरण्यादित्यर्थः। एवं देशतो न सहचरो यतः शब्द आकाशे प्रत्ययो बुद्धावर्थस्तु श्वेतगुणादिः प्रासादादिष्विति भावः। एव-मिति। एवं शब्दोऽपि स्वावस्थाभिः विक्रियमाणो नाप्यर्थबुद्ध्योः सहचरः, एवं प्रत्ययोऽपी-त्यर्थः। उपसंहरति–इत्यन्यथेति। सूत्रार्थमुपसंहरति–एवं तत्प्रविभागेति। एवं मनुष्यविषये शब्दार्थप्रत्ययेषु प्रविभागसंयमात् साक्षात्कारपर्यन्तात्सर्वभूतानां रुतं तदर्थप्रत्ययं च योगी जानाति, योगजधर्मस्याचिन्त्यशक्तित्वाद् धर्माणां स्वसदृशफलदानस्यौत्सर्गिकत्वाच्चेत्यर्थः। अस्मदादीनां च शब्दार्थप्रत्ययभेदसाक्षात्कारे सत्यपि तस्य साक्षात्कारस्य संयमाजन्यत्वान्न सर्वभूतरुतज्ञानं भवति, संयमस्यैव हीयं सिद्धिरिति। एवमुत्तरसूत्रेष्वपि यथास्थलमिदमेव समाधानम् ॥१७॥

इस प्रकार शब्द, अर्थ तथा ज्ञान के सांकर्य को प्रदर्शित करने के पश्चात् भाष्यकार अधुना उनके प्रविभाग को दिखाते हैं–'तेषामित्यादिना।' इन तीन प्रकार के शब्द, अर्थ और ज्ञान में से सर्वप्रथम शब्दभेद होने पर भी उनके अर्थ और ज्ञान में अभेद होने से शब्द और अर्थ का जो भेद होता है, उसे भाष्यकार प्रदर्शित करते हैं–'श्वेतत इत्यादिना प्रत्ययश्चेत्यन्तेन।' योगवार्त्तिककार 'क्रियार्थ' और 'कारकार्थ'

---

1. क ग घ च छ–गुणाकारत्वे प्रमाणं, ख–गुणाकार एक एवेति शब्दादर्थप्रत्यययोर्भेद इत्यर्थः। अर्थस्य प्रत्ययस्य च क्रियाकारकात्मकस्यैकत्वे प्रमाणम्।
2. क ग घ च छ–शब्दप्रत्यययोर्विषयत्वात्, ख–स शब्दप्रत्यययोर्विषयः अतः कर्मकर्तृविरोध इति भावः। तथा स हि स एव।
3. क ग घ च छ–विक्रियमाणत्वाच्च न शब्दप्रत्यययोः सहगतो न कालत सहचरो वैयधिकरण्या-दित्यर्थः, ख–विक्रियमाणेन शब्दप्रत्यययोः सहगतो न तदुभयसाहित्येन विक्रियत इत्यर्थः।

इन दोनों पदों का विग्रह करते हैं–'**क्रिया साध्यरूपोऽर्थो यस्य स क्रियार्थः**' अर्थात् जिसका '**साध्यरूप**' अर्थ होता है उसे क्रियार्थ कहते हैं, जैसे '**श्वेतते**' यह क्रियार्थक पद है तथा '**कारकः सिद्धरूपोऽर्थो यस्य स कारकार्थः**' अर्थात् जिसका '**सिद्धरूप**' अर्थ होता है, उसे कारकार्थ कहते हैं, जैसे '**श्वेतः**' यह कारकार्थ पद है। ये दोनों क्रियावाची और कारकवाची शब्द भिन्न-भिन्न हैं, किन्तु इन दोनों पदों का क्रिया और कारकरूप अर्थ एक ही है और वह है–'श्वेतगुण।' इसी प्रकार इन दोनों '**श्वेतते**' और '**श्वेतः**' पदों का ज्ञान भी एकरूप है।

**शङ्का**–इन दोनों पदों के क्रियाकारकात्मक गुणाकार होने में पूर्वपक्षी प्रश्न करता है–'**कस्मादिति।**'

**समाधान**–उत्तर है–'**सोऽयमित्यभिसम्बन्धादिति।**' श्वेतनरूप जो क्रिया है वही श्वेतरूप कारकगुण है और जो '**श्वेतते**' इससे श्वेताकार ज्ञान (प्रत्यय) होता है, वह '**श्वेतः**' इस पद से भी होता है। इस प्रकार अभेदात्मक प्रत्यभिज्ञान से (अभेदसम्बन्ध की कल्पना से) ये दोनों पद क्रियाकारकात्मक गुणाकार प्रतीत होते हैं।

**शङ्का**–तो फिर कैसे शब्द और अर्थ का अभेदरूप से संकेत किया जाता है?

**समाधान**–इस पर भाष्यकार कहते हैं–'**एकाकार इति।**' एकाकार आरोपरूप प्रत्यय ही '**संकेत**' कहलाता है। यह संकेत आरोपित अभेदरूप ही है, न कि पारमार्थिक अभेदरूप।

**शङ्का**–शब्द और अर्थ के अभेदप्रत्यय से प्रत्यभिज्ञा का ही बाध क्यों नहीं हो जाता है?

**समाधान**–इस पर भाष्यकार कहते हैं–'**यस्त्विति।**' यह तो श्वेतवस्तुरूप वाला '**अर्थ**' है, वह तो अपने वाचक '**श्वेत**' शब्द और अपने आकार से आकारित '**श्वेताकार ज्ञान**' का विषय (आलम्बन) होने से और स्वशब्दादि से व्यावृत्त, नूतनता और पुराणता आदि अवस्थाओं के रूप से परिणाम को प्राप्त होने से न तो शब्दप्रत्ययसहगत है और न कालसहचर है, क्योंकि अर्थ का शब्द और ज्ञान से वैयधिकरण्य है। (भाव यह है कि जब वह अर्थ अपने धर्मों, लक्षणों तथा अवस्थाओं के द्वारा परिणत होता रहता है उस समय उसके वाचक शब्द और तदाकारित ज्ञान में अर्थगत परिणाम नहीं होता है। उन शब्दों एवं ज्ञानों के परिणाम अर्थगतपरिणाम से पृथक् होते हैं)। इसी प्रकार '**अर्थ**' देश के साथ नहीं जाता है, क्योंकि शब्द आकाश में, ज्ञान बुद्धि में तथा श्वेतगुणादिरूप अर्थ प्रासादादि में रहता है। '**एवमिति।**' इसी प्रकार '**शब्द**' भी अपनी अवस्थाओं द्वारा परिणत होता हुआ न तो 'अर्थ' के साथ जाता है और न प्रत्ययरूप बुद्धि के साथ जाता है। अर्थात् शब्द अपने वाच्यार्थ तथा तदाकारित ज्ञान से भिन्नरूप में ही परिणत होता है। इसी प्रकार '**प्रत्यय**' भी

अपनी अवस्थाओं के द्वारा परिणत होता हुआ अपने आलम्बनीभूत अर्थ और तद्वाचक शब्द के रूप से परिणत नहीं होता है। उक्त तथ्य को उपसंहृत करते हुए भाष्यकार कहते हैं–'**इत्यन्यथेति**।' इससे यह सिद्ध होता है कि '**शब्द**' अन्य प्रकार के पदार्थ हैं, '**अर्थ**' अन्य प्रकार के पदार्थ हैं तथा '**प्रत्यय**' अन्य प्रकार के पदार्थ हैं। इस प्रकार इन तीनों में वस्तुतस्तु भिन्नता ही होती है। प्रकृत सूत्रार्थ का अवसान करते हुए भाष्यकार कहते हैं–'**एवं तत्प्रविभागेति**।' इस प्रकार प्राणिविषयक शब्द, अर्थ तथा ज्ञान के प्रविभाग के विषय में साक्षात्कारपर्यन्त संयम करने से योगी को अखिल प्राणियों के '**रुत**' अर्थात् शब्द का अवबोध होता है, क्योंकि योगजधर्म अचिन्त्य शक्ति वाला होता है तथा धर्मों का यह सामान्यनियम होता है कि वे स्वसदृश फल को प्रदान करते हैं। हम जैसे साधारण लोगों को शब्द, अर्थ और ज्ञान के भेद का साक्षात्कार (ज्ञान) होने पर भी उस साक्षात्कार के संयमजन्य न होने से सब भूतों के शब्द का ज्ञान नहीं होता है। यही संयमजन्य सिद्धि है। इसी प्रकार उत्तरवर्ती सूत्रों में भी यथास्थान संयमजन्य सिद्धि का तुल्य समाधान किया गया है॥१७॥

### योगसूत्रम्

## संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्॥१८॥

(संयम द्वारा) संस्कार का साक्षात्कार होने से (योगी को) पूर्व जन्मों का ज्ञान (अपरोक्षानुभव) होता है॥१८॥

### व्यासभाष्यम्

**द्वये खल्वमी संस्काराः स्मृतिक्लेशहेतवो वासना[1]रूपाः, विपाकहेतवो धर्मा-[2]धर्मरूपाः। ते पूर्वभवाभिसंस्कृताः परिणामचेष्टानिरोधशक्तिजीवन[3]धर्मवदपरि-दृष्टाश्चित्तधर्माः। तेषु संयमः [4]संस्कारसाक्षात्क्रियायै समर्थः। न च देशकाल-निमित्तानुभवैर्विना तेषामस्ति साक्षात्करणम्। तदित्थं संस्कारसाक्षात्कारणात्पूर्व-जातिज्ञानमुत्पद्यते योगिनः। परत्राप्येवमेव संस्कारसाक्षात्करणात्पर[5]जातिसंवेदनम्। अत्रेदमाख्यानं श्रूयते–भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणाद्दशसु महासर्गेषु**

---

1. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**रूपाः**, ब–**अभिधानाः**।
2. क ख ग घ च छ ज त थ द ध न प फ ब भ म य र–**अधर्म०** उपलभ्यते, झ–**अधर्म०** नोपलभ्यते।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**धर्मवत्**, ब–**धर्माः**।
4. ख ग घ च ज झ त द ध न प फ ब भ म य र–**संस्कार०** उपलभ्यते, क छ थ–**संस्कार०** नोपलभ्यते।
5. क ख ग घ च छ झ त थ द ध न प फ ब भ म य र–**जातिसंवेदनं**, ज–**चित्तज्ञानम्**।

**जन्म[1]परिणामक्रममनुपश्यतो विवेकजं ज्ञानं प्रादुर[2]भवत्। अथ भगवानावट-यस्तनुधरस्तमुवाच—दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धि[3]सत्त्वेन त्वया नरक-तिर्यग्[4]गर्भसंभवं दुःखं [5]संपश्यता देवमनुष्येषु पुनःपुनरुत्पद्यमानेन सुखदुःखयोः किमधिकमुपलब्धमिति? भगवन्तमावट्यं जैगीषव्य उवाच—दशसु महासर्गेषु भव्य-त्वादनभिभूतबुद्धिसत्त्वेन मया नरक[6]तिर्यग्भवं दुःखं संपश्यता देवमनुष्येषु पुनः-पुनरुत्पद्यमानेन यत्किञ्चिदनुभूतं तत्सर्वं दुःखमेव प्रत्यवैमि। भगवानावट्य उवाच—यदिदमायुष्मतः प्रधानवशित्वमनुत्तमं च सन्तोषसुखं किमिदमपि दुःखपक्षे निक्षिप्तमिति? भगवाञ्जैगीषव्य उवाच—विषयसुखापेक्षयैवेदमनुत्तमं सन्तोषसुख-मुक्तम्, कैवल्य[7]सुखापेक्षया दुःखमेव। बुद्धिसत्त्वस्यायं धर्म[8]स्त्रिगुणः, त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति। [9]दुःखस्वरूपस्[10]तृष्णातन्तुः, [11]तृष्णादुःखसंतापापगमात्तु प्रसन्नम[12]बाधं सर्वानुकूलं सुखमिदमुक्तमिति॥१८॥**

ये संस्कार दो प्रकार के हैं—स्मृति और क्लेश के कारणभूत 'वासनारूप' संस्कार तथा विपाक (फल) के कारणभूत 'धर्माधर्मरूप' संस्कार। ये (दोनों प्रकार के) संस्कार पूर्वजन्मों में संगृहीत अथवा निष्पादित हुए रहते हैं। ये परिणाम, चेष्टा, निरोध, शक्ति तथा जीवन आदि धर्मों की भाँति चित्त के 'अपरिदृष्ट' धर्म हैं। इन संस्कारों में साधित संयम संस्कारों का साक्षात्कार कराने में सक्षम होता है। और इन संस्कारों का साक्षात्कार देश, काल तथा

---

1. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**परिणामक्रमं**, ब—**परिणामम्**।
2. क ग च छ ज झ त थ द ध न ब भ—**अभूत**, ख घ प फ म य र—**अभवत्**।
3. क ख ग घ च छ ज थ द ध न प फ ब भ म य र—**सत्त्वेन** (उभयत्र), झ त—**संवेदनत्वेन** (उभयत्र)।
4. क ग घ च छ ज झ त थ द ध न प फ भ म य र—**गर्भसंभवं**, ख—**भवं**, ब—**गमन०**।
5. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**सम्पश्यता**, ब—**अनुपश्यता**।
6. क—**तिर्यग्भावं दुःखं सम्पश्यता**, ख—**तिर्यग्भवं दुःखं पश्यता**, ग घ च छ ज झ त थ द ध न प फ भ म य र—**तिर्यग्भवं दुःखं सम्पश्यता**, ब—**तिर्यग्गमनं अनुपश्यता**।
7. क ख ग च छ ज झ त थ द ध न ब भ म—**सुख०** उपलभ्यते, घ प फ य र—**सुख०** नोपलभ्यते।
8. क ख ग घ च छ ज त थ द ध न प फ ब भ म य र—**त्रिगुणः** उपलभ्यते, झ—**त्रिगुणः** नोपलभ्यते।
9. क ख ग च ज झ त थ द ध न ब भ य—**दुःखरूपः**, घ प फ म र—**दुःखस्वरूपः**, छ—**दुःखरूपा**।
10. क ख ग घ च ज झ त थ द ध न प ब भ म य र—**तृष्णातन्तुः**, छ—**तृष्णा ततः**, फ—**तृष्णा**।
11. क ख ग घ च छ ज झ त थ द ध न ब भ म र—**तृष्णादुःखसन्तापापगमात्**, प य—**तृष्णादुःखसन्तानापगमात्**, फ—**दुःखसन्तापापगमात्**।
12. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**अबाधं**, ब—**अनाबाधम्**।

और भोगरूप तीन प्रकार का फल प्राप्त होता है। ये क्लेशादि रजोगुण एवं तमोगुणमूलक हैं, अर्थात् सत्त्वमूलक नहीं हैं, क्योंकि रजोगुण एवं तमोगुण के सम्पर्क से रहित सत्त्वगुणप्रचुरा बुद्धि से तो विवेकख्यातिमात्र की उत्पत्ति होती है (न कि क्लेशादि की भी उत्पत्ति)। इस प्रकार रजोगुण एवं तमोगुणमूलक होने से जात्यादि विपाकत्रय तदात्मक होकर सत्त्वबहुला बुद्धि को आच्छादित (आवृत्त) करता है। इस आवरण के क्षीण होने से योगी का चित्त इच्छानुसार विचरण (प्रवृत्तिलाभ) करता है और वह निखिल पदार्थों को जानता है॥४३॥

**बालप्रिया–**

**'तदेतद्रजस्तमोमूलम्'**–विपाकत्रय सत्त्वमूलक नहीं, अपितु रजस्तमोमूलक होता है। अतः अविद्यादि के साम्राज्यकाल में विवेकख्यातिरूप विद्या का उदय सम्भव नहीं है। क्योंकि दोनों में परस्पर विरोध है। अविद्यादि के कारणभूत रजोगुण एवं तमोगुण के क्षीण होने पर ही बुद्धिसत्त्व में विवेकज्ञान जागरित होता है। इसलिये राजस तथा तामस आवरण से रहित होकर ही निरावृत्त चित्त का यथेच्छगमन वर्णित हुआ है॥४३॥

### योगवार्त्तिकम्

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः। योगशास्त्रोक्तसंयमविशेषाद् वक्ष्यमाणा बहिरकल्पिता वृत्तिर्महाविदेहाख्या सिद्धिर्भवति, ततश्च सत्त्वप्रकाशावरणभङ्ग इत्यर्थः। महाविदेहां व्याख्यातुमादौ सामान्यविदेहामाह–शरीरादिति। मनसो बहिर्वृत्तिलाभोऽत्र स्वशरीरस्येव बहिर्वस्तूनां संकल्पादिवशता, सा च बहिरधिष्ठानरूपा धारणा विदेहा सामान्यमित्यर्थः। धारणेति च तान्त्रिकी संज्ञा। तस्या अवान्तरभेदमाह–सा यदीति। शरीरनिरपेक्षेति त्यक्तशरीरेत्यर्थः। अनयाऽपि परशरीरावेशो लिङ्गदेहस्य भवतीति प्रसङ्गादाह–यथेति। तत इत्यादिसूत्रावयवं व्याचष्टे–ततश्चेति। क्लेशेति। क्लेशश्च कर्म च विपाकत्रयं च यद्रजस्तमोमूलकं सत्त्वस्यावरकं तस्य च समूलस्य क्षयो भवतीत्यर्थः। तेषां क्षये च निरावरणं योगिनः चित्तं स्वेच्छया विहरति विजानाति चेति। चशब्दः स्वोक्तं परशरीरावेशं समुच्चिनोति॥४३॥**

**'बहिरिति'।** योगशास्त्रोक्त संयमविशेष से वक्ष्यमाण **'महाविदेहाख्या'** बहिरकल्पिता वृत्ति सिद्ध होती है, जिससे प्रकाशरूप बुद्धि को आवृत्त करने वाला (क्लेशकर्मविपाकरूप) आवरण क्षीण (भंग) हो जाता है। महाविदेहाख्या वृत्ति की व्याख्या करने की इच्छा से भाष्यकार सामान्य विदेहावृत्ति के बारे में सर्वप्रथम बताते हैं– **'शरीरादिति'।** शरीर की भाँति मन के बहिर्वृत्तिलाभ होने का अर्थ है–बहिर्वस्तुओं को योगी के संकल्प के अधीन होना। इसी बहिर्वस्त्वधिष्ठानरूपा धारणा को 'सामान्यविदेहावृत्ति' कहते हैं। **'विदेहावृत्ति'** के लिये (बहिर्वस्त्वधिष्ठानरूपा) **'धारणा'** यह

तान्त्रिकी संज्ञा है। विदेहाख्यधारणा के अवान्तरभेद को भाष्यकार बताते हैं–'**सा यदीति**'। '**शरीरनिरपेक्ष**' शब्द का अर्थ है–त्यक्त शरीर अर्थात् शरीर से बाहर निकले मन की बहिर्वृत्ति को महाविदेहाख्या धारणा कहते हैं। इस महाविदेहाख्या धारणा से योगी के सूक्ष्मशरीर का अन्य पुरुष के शरीर में प्रवेश होता है। इसी तथ्य को भाष्यकार प्रसङ्गतः बताते हैं–'**यथेति**'। अब भाष्यकार सूत्र के उत्तरार्द्ध 'ततः **प्रकाशावरणक्षयः**' की व्याख्या करते हैं–'**ततश्चेति**'। वार्त्तिककार आगे के भाष्य को उठाते हैं–'**क्लेशेति**'। सत्त्व के आवरकभूत क्लेश, कर्म तथा विपाकत्रय, जो रजस्तमोमूलक हैं, का भी महाविदेहाख्या धारणा से समूलोन्मूलन हो जाता है। इस प्रकार रजस्तमोमूलक आवरण के क्षीण होने पर महाविदेहजयी का निरावृत चित्त (शरीर के बाहर) स्वेच्छापूर्वक विहार करता है और पदार्थों को जानता है। 'च' शब्द भाष्योक्त '**परशरीरावेश**' को ही समुच्चित करता है॥४३॥

संयमसाध्य अगली सिद्धि का प्रतिपादक सूत्र इस प्रकार है–

### योगसूत्रम्

## स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः॥४४॥

भूतों के स्थूल, स्वरूप, सूक्ष्म, अन्वय तथा अर्थवत्त्व–रूप में संयम करने से योगी को 'भूतजय' (सिद्ध) होता है॥४४॥

### व्यासभाष्यम्

**तत्र [1]पार्थिवाद्याः शब्दादयो विशेषाः सहकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः। एतद्भूतानां प्रथमं रूपम्। [2]द्वितीयं रूपं [3]स्वसामान्यं मूर्तिर्भूमिः स्नेहो जलं वह्निरुष्णता वायुः [4]प्रणामी [5]सर्वतोगतिराकाश इत्येतत्स्वरूपशब्देनोच्यते। [6]अस्य [7]सामान्यस्य शब्दादयो विशेषाः। तथा चोक्तम्–एकजातिसमन्वितानाः-**

---

1. क ख ग घ च ज झ त द ध न प फ भ म य र–**पार्थिवाद्याः शब्दादयः**, छ थ–**पृथिव्यादयः शब्दादीनां**, ब–**पार्थिवाः**।
2. क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र–**द्वितीयं रूपं** उपलभ्यते, द–**द्वितीयं रूपं** नोपलभ्यते।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**स्वसामान्यं**, ब–सामान्यम्।
4. क ख ग घ च च ज झ त थ द ध न प फ भ म य र–**प्रणामी**, ब–**प्रणामित्वम्**।
5. क ग घ च छ ज झ त थ द ध न प फ ब भ म य र–**सर्वतोगतिः**, ख–**सर्वगतिः**।
6. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**अस्य**, ब–**तस्य**।
7. क ख ग घ च ज झ त द ध न प फ ब भ म य र–**सामान्यस्य**, छ थ–**स्वस्वसामान्य०**।

मेषां धर्ममात्रव्यावृत्तिरिति। सामान्यविशेषसमुदायोऽत्र द्रव्यम् [1]द्रष्टव्यम्। [2]द्विष्ठो हि समूहः। प्रत्यस्तमित[3]भेदावयवा[4]नुगतः शरीरं वृक्षो वनमिति। शब्देनोपात्त-भेदावयवानुगतः समूहः—उभये देवमनुष्याः, समूहस्य देवा एको भागो मनुष्या द्वितीयो भागः। ताभ्यामेवाभिधीयते समूहः। [5]स च भेदाभेदविवक्षितः। आम्राणां वनं ब्राह्मणानां सङ्घः, आम्रवणं ब्राह्मणसङ्घ इति। स पुनर्द्विविधो युतसिद्धा-वयवोऽयुतसिद्धावयवश्च। युतसिद्धावयवः समूहो वनं सङ्घ इति। अयुतसिद्धावयवः सङ्घातः—शरीरं वृक्षः परमाणुरिति। अयुतसिद्धावयव[6]भेदानुगतः समूहो द्रव्य-मिति पतञ्जलिः। एतत्[7]स्वरूपमित्युक्तम्। अथ किमेषां सूक्ष्मरूपम्? तन्मात्रं भूतकारणम्। तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्माऽयुतसिद्धा[8]वयवभेदानु-गतः समुदाय इत्येवं सर्वतन्मात्राण्येतत्तृतीयम्। अथ भूतानां चतुर्थं रूपं ख्याति-क्रियास्थितिशीला गुणाः कार्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः। अथै[9]षां पञ्चमं रूपमर्थवत्त्वम्, भोगापवर्गार्थता गुणेष्व[10]न्वयिनी, [11]गुणास्तन्मात्रभूतभौतिकेष्विति सर्वमर्थवत्। तेष्विदानीम्भूतेषु पञ्चसु पञ्चरूपेषु [12]संयमात्तस्य [13]तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति। तत्र [14]पञ्च भूतस्वरूपाणि जित्वा भूतजयी

---

1. च जु झ त द ध न भ—**द्रष्टव्यम्** उपलभ्यते, क ख ग घ छ थ प फ ब म य र—**द्रष्टव्यं** नोपलभ्यते।
2. क ख ग घ च ज झ त द ध न प फ ब भ म य र—**द्विष्ठः**, छ थ—**तेषाम्**।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**भेदावयवानुगतः**, ब—**भेदावयवः**।
4. थ—**द्विष्ठो हि समूहो जातिव्यक्त्यात्मकः** (अनुगतः—पश्चात्) उपलभ्यते, क ख ग घ च छ ज झ त द ध न प फ ब भ म य र—**द्विष्ठो.....यात्मकः** नोपलभ्यते।
5. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**स च** उपलभ्यते, ब—**स च** नोपलभ्यते।
6. क ग घ च छ झ त थ द ध न प फ ब भ म य र—**भेद०** उपलभ्यते, ख ज—**भेद०** नोपलभ्यते।
7. क ख ग घ च ज झ त द ध न प फ ब भ म य र—**स्वरूपं**, छ थ—**परमाणुस्वरूपम्**।
8. क ख ग घ च छ झ त थ द ध न प फ ब भ म य र—**अवयवभेद०** , ज—**भेदावयव०**।
9. क ख ग घ च छ ज त थ द ध न प भ य र—**एषां**, झ—**अपि**, ब फ म—**एषां/अपि** नोपलभ्यते।
10. क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र—**अन्वयिनी**, द—**अन्वयिनः**।
11. क ख ग घ च छ ज झ त थ द ध न प फ ब भ म य र—**गुणाः**, म—**गुणः**।
12. क ख ग घ च छ ज थ द ध न प फ ब भ म य र—**संयमात्**, झ त—**संयम०**।
13. क ग घ च छ झ त थ द ध न प फ ब भ म य र—**तस्य रूपस्य** उपलभ्यते, ख ज—**तस्य रूपस्य** नोपलभ्यते।
14. क ग घ च छ ज झ त थ द ध न प फ ब भ म य र—**पञ्चभूत०**, ख—**भूतपञ्च**।

**भवति। तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति॥४४॥**

उनमें से पृथ्वी आदि पाँच भूतों में रहने वाले आकारादि धर्मों सहित शब्दादि विशेष 'स्थूल' शब्द से संकेतित अर्थात् कहे जाते हैं। यह पञ्च भूतों का पहला रूप है। पञ्च भूतों का जो अपना-अपना सामान्य धर्म है, वह भूतों का दूसरा रूप है, जैसे भूमि का सामान्यरूप मूर्त्तता, जल का सामान्यरूप स्निग्धता, वह्नि का सामान्यरूप ऊष्णता, वायु का सामान्यरूप प्रणामिता तथा आकाश का सामान्य रूप सर्वगामिता है—भूतों के ये सामान्यधर्म 'स्वरूप' शब्द से पुंकारे जाते हैं। इस सामान्य के शब्दादि विशेष हैं। ऐसा ही कहा गया है—'एक-एक धर्म से युक्त इन पंचभूत्तों की अपने-अपने शब्दादि धर्म से परस्पर व्यावृत्ति (भेद) होती है।' यहाँ (सांख्ययोग मत में) सामान्य-विशेष के समूह को 'द्रव्य' कहते हैं। यह समूह दो प्रकार का होता है। जिसके अवयव-भेद प्रत्यस्तमित हो गये हैं, यह एक प्रकार का 'समूह' है, जैसे—शरीर, वृक्ष, यूथ तथा वन। जिसके अवयव-भेद शब्द द्वारा प्रतीत होते हैं, यह दूसरे प्रकार का 'समूह' है, जैसे—दोनों देव-मनुष्य। यहाँ समूह का एक भाग देवता है तथा दूसरा भाग मनुष्य। इन दोनों अवयव-भेदों से 'समूह' अभिहित होता है। समूह विवक्षित भेद वाला तथा अविवक्षित भेद वाला भी होता है। 'आमों का वन', 'ब्राह्मणों का संघ'—ये विवक्षित भेद समूह के उदाहरण हैं। 'आम्रवन', 'ब्राह्मणसंघ'—ये अविवक्षित भेद समूह के उदाहरण हैं। यह समूह फिर दो प्रकार का होता है—एक युतसिद्धावयव समूह तथा दूसरा अयुतसिद्धावयव समूह। युतसिद्धावयव (पृथक्करणीय) समूह के उदाहरण हैं—'वन', 'संघ' आदि। अयुतसिद्धावयव (अपृथक्करणीय) समूह के उदाहरण हैं—शरीर, वृक्ष तथा परमाणु आदि। पतञ्जलि के मत में 'अयुतसिद्धावयव भेदानुगत समूह 'द्रव्य' है। भूतों का यही दूसरा सामान्यरूप 'स्वरूप' कहलाता है। अच्छा, इन पञ्च भूतों का 'सूक्ष्म' रूप क्या है? (उत्तर है)—पञ्चभूतों का कारण तन्मात्र ही पञ्च भूतों का 'सूक्ष्म' रूप है। पञ्चतन्मात्र का एक अवयव परमाणु है। यह परमाणु ही सामान्य-विशेषरूप तथा अयुतसिद्धावयव भेदानुगत समूह वाला है। इस प्रकार पञ्चतन्मात्र भूतों का तीसरा रूप है। इसके बाद पञ्चभूतों का चौथा रूप प्रकाश-क्रिया-स्थिति-स्वभाव वाला तथा सम्पूर्ण कार्यों में अनुगत रहने वाला गुणत्रय 'अन्वय' शब्द से कहा जाता है। इन पञ्च भूतों का पञ्चम रूप 'अर्थवत्त्व' है। यह भोगापवर्गरूप 'अर्थवत्ता' सत्त्वादि गुणों में अनुगत है, किन्तु ये गुण भूत तथा भौतिक समस्त पदार्थों

मे विद्यमान हैं। अतः भूत-भौतिक सभी पदार्थ प्रयोजनरूप अर्थ से युक्त हैं। पञ्चभूत के इन पाँच रूपों में संयम करने से उस-उस रूप का स्वरूपदर्शन तथा जय प्रादुर्भूत होता है। पाँचों भूतस्वरूपों को जीतकर योगी 'भूतजयी' होता है। भूतजय से भूत तथा भूतप्रकृतियाँ (तन्मात्राएँ) योगी के संकल्प का अनुसरण उसी प्रकार करती हैं, जिस प्रकार गायें अपने-अपने बछड़ों का अनुगमन करती हैं॥४४॥

## तत्त्ववैशारदी

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः। स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चा- र्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि। तेषु संयमात्तज्जयः। स्थूलमाह– तत्रेति।** पार्थिवाः पायसीयास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासंभवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सुरभ्यादयः। एते हि नाम- रूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः। एतेषां पञ्च पृथिव्याम्। गन्धवर्जं चत्वारोऽप्सु। गन्धरसवर्जं त्रयस्तेजसि। गन्धरसरूपवर्जं द्वौ नभस्वति। शब्द एवाकाशे। त एत ईदृशा विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे। [1]तत्र पार्थिवास्तावद्धर्माः–

आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च।
वृत्तिर्भेदः क्षमा कार्श्यं काठिन्यं सर्वभोग्यता॥

अपां धर्माः– स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत्।
शैत्यं रक्षा पवित्रत्वं संधानं चौदका गुणाः॥

तैजसा धर्माः– ऊर्ध्वभाक्[2]पाचकं दग्धृ पावकं लघु भास्वरम्।
प्रध्वंस्योजस्वि वै तेजः [3]पूर्वाभ्यां भिन्नलक्षणम्॥

वायवीया धर्माः– तिर्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम्।
चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः॥

आकाशीया धर्माः– सर्वतोगतिरव्यूहोऽ[4]विष्टम्भश्चेति [5]ते त्रयः।
आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणाः॥

इति। त एत आकारप्रभृतयो धर्मास्तैः सहेति। आकारश्च सामान्यविशेषो गोत्वादिः।

---

1. क छ थ द ध–तत्रापि, ख घ ग घ च ज झ त न–तत्र।
2. क ख ग घ च छ ज झ त न–पाचकं दग्धृ पावकं, थ द ध–पावकं दग्धृ पाचकम्।
3. क ख ग घ च छ ज झ त द ध न–पूर्वाभ्यां, थ–पूर्वेभ्यः।
4. क ख ग घ च छ झ त न–अविष्टम्भः, ज–अवष्टम्भः, थ द ध–विष्टम्भः।

**द्वितीयं रूपमाह—द्वितीयं रूपं स्वसामान्यमिति। मूर्तिः सांसिद्धिकं काठिन्यम्। स्नेहो [1]जलं [2]मज्जा पुष्टिबलाधानहेतुः। वह्निरुष्णतौदर्ये सौर्ये भौमे च सर्वत्रैव तेजसि समवेतोष्ण- तेति। सर्वं चैतद्धर्मधर्मिणोरभेदविवक्षयाभिधानम्। वायुः प्रणामी वहनशीलः। तदाह—**

**चलनेन तृणादीनां शरीरस्याटनेन च।**
**सर्वगं वायुसामान्यं नामीत्वमनुमीयते॥**

**सर्वतोगतिराकाशः, सर्वत्र शब्दोपलब्धिदर्शनात्। श्रोत्राश्रयाकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धिरित्युपपादितमधस्तात्। एतत्स्वरूपशब्देनोक्तम्। अस्यैव मूर्त्यादिसामान्य- स्य शब्दादयः षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो मूर्त्यादीनां सामान्यानां भेदाः। सामान्यान्यपि मूर्त्यादीनि जम्बीरपनसामलकफलादीनि रसादिभेदात्परस्परं व्यावर्तन्ते। तेनैतेषामेते रसादयो विशेषाः। तथा चोक्तम्—[3]एकेति। एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनामेकैकया जात्या मूर्तिस्नेहादिना [4]समन्वितानामेषां षड्जादिधर्ममात्र- व्यावृत्तिरिति। तदेवं सामान्यं मूर्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः।**

'**स्थूलेति**।' तत्त्ववैशारदीकार इतरेतरद्वन्द्वसमास को संकेतित करते हैं—**स्थूलं च स्वरूपं च सूक्ष्मं च अन्वयश्च अर्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि** अर्थात् स्थूल, स्वरूप, सूक्ष्म, अन्वय तथा अर्थवत्त्व ये भूतों के रूप हैं। इनमें संयम करने से भूतजय होता है अर्थात् योगी भूतजयी हो जाता है।

भूतों के '**स्थूल**' रूप को भाष्यकार बताते हैं—'**तत्रेति**।' पार्थिव, जलीय, तैजस, वायवीय तथा आकाशीय शब्द, स्पर्श, रूप, रस तथा गन्ध क्रमशः षड्जगान्धारादि, शीतोष्णादि, नीलपीतादि, कषायमधुरादि तथा सुरभ्यादि '**विशेष**' से युक्त हैं। ये नाम, रूप तथा प्रयोजन से परस्पर भिन्न हैं, इसलिये '**विशेष**' कहे जाते हैं। इनमें से पृथ्वी में पाँच विशेष हैं, जल में गन्ध को छोड़कर चार विशेष हैं, तेज में गन्ध और रस को छोड़कर तीन विशेष हैं, नभ में गन्ध, रस और रूप को छोड़कर दो विशेष हैं तथा आकाश में केवल एक विशेष है। इस प्रकार के ये '**विशेष**' अपने आकारादि सहकारी धर्मों के साथ योगशास्त्र में '**स्थूल**' शब्द से परिभाषित हैं। इनमें से पृथ्वी के धर्म ये हैं—'अवयवों का सन्निवेश विशेष, भारीपन, रूखापन, आच्छादन, स्थिरता, सर्वभूताधारता, विदारण, सहनशीलता, दृढता, कठिनता तथा सर्वभोग्यता ये पृथ्वी के धर्म हैं।' जल के धर्म ये हैं—'स्नेह, सूक्ष्मता, प्रभा, शुक्लता, मृदुता, भारीपन, शीतता, रक्षण, पवित्रता, संमेलन ये दश धर्म जल के हैं।' तेज के धर्म ये हैं—

---

1. क ख ग घ च छ ज झ त थ द ध—**जलं**, न—**जले**।
2. क ख ग घ च ज झ त—**मृजा**, छ थ द ध न—**मज्जा**।
3. थ द ध—**एकेति** उपलभ्यते, क ख ग घ च छ ज झ त न—**एकेति** नोपलभ्यते।
4. क ख ग घ च छ ज त थ द ध न—**समन्वितानां**, झ—**समाधिगतानाम्**।

'ऊर्ध्वगमनशीलता, पाचकता, दाहकता, पवित्रता, लघुता, प्रकाशकता, प्रध्वंसकता तथा बलशीलता पूर्व के पृथ्वी तथा जल से भिन्न लक्षण वाला तेज अग्नि कहलाता है।' वायु के धर्म ये हैं–'टेढ़ा चलना, पवित्रता, गिराना, कम्पन-सामर्थ्य, चञ्चलता, आच्छादन का अभाव, रूखापन ये आठ पूर्व तीन से पृथक् वायु के धर्म हैं।' आकाश के धर्म ये हैं–'व्यापक, विभाग करना और अवकाश प्रदान करना ये तीन पूर्व के चारों के धर्म से विलक्षण आकाश के धर्म कहे जाते हैं।' ये आकारादि धर्म हैं, इन आकारादि धर्मों सहित भूतों के विशेषरूप ही भूतों के 'स्थूल' रूप कहे जाते हैं। किञ्च यह आकार पशुत्वसामान्य का गोत्वादि विशेषरूप है।

भूतों के द्वितीय रूप को भाष्यकार बताते हैं–'**द्वितीयं रूपं स्वसामान्यमिति।**' पञ्च-भूतों का जो स्व-स्व सामान्य धर्म है, वह पञ्चभूतों का '**स्वरूप**' नामक द्वितीय रूप है। जैसे '**मूर्त्ति**'=स्वाभाविक काठिन्य पृथ्वी का स्वरूप है। '**स्नेह**' जल का स्वरूप है, जो मज्जा (मांस और हड्डियों के बीच का रस) वर्धन तथा शारीरिक बलाधान का हेतु है। 'ऊष्णता' वह्नि का स्वरूप है। यह ऊष्णता उदर-सूर्य-मंगल-ग्रहसम्बन्धी समस्त तेजोमय पदार्थों में समवायसम्बन्ध से रहती है। यह जो मूर्त्ति को भूमि, स्नेह को जल तथा ऊष्णता को वह्नि कहा गया है, वह धर्म-धर्मी की अभेद-विवक्षा से है। वायु '**प्रणामी**'=वहनशील है। जैसा कि कहा गया है–'**चलनेन...मनुमीयते**' अर्थात् 'तृणादियों के कम्पित होने से और शरीर के भ्रमण करने से सर्वव्यापी वायु का वहनशीलरूप सामान्य धर्म अनुमित होता है।' '**सर्वतोगति**'=सर्वत्र विद्यमानता अर्थात् व्यापित्व आकाश का स्वरूप है, क्योंकि (आकाश का विशेष धर्म) शब्द सब जगह सुनाई पड़ता है। श्रोत्र के आश्रयभूत आकाश के विशेष गुण शब्द से पार्थिवादि शब्दों का ज्ञान होता है, ऐसा पूर्व प्रतिपादित हो चुका है। भूतों का यह द्वितीय स्वसामान्य रूप '**स्वरूप**' शब्द से अभिहित है। इस सामान्य के ही शब्दादि विशेष हैं। अर्थात् मूर्त्त्यादि सामान्यों के ही षड्जादि, उष्णत्वादि, शुक्लत्वादि, कषायत्वादि और सुरभित्वादि भेद (विशेष) हैं। जम्बीर (चकोतरा), पनस (कटहल) आमलक (आँवला) आदि फलों के मूर्त्त्यादि सामान्य भी रसादि-भेद से परस्पर भिन्न-भिन्न हैं। इन षड्जादि धर्मों से युक्त मूर्त्त्यादि सामान्य के ये रसादि धर्म विशेष हैं। जैसा कि कहा गया है–'**एकेति।**' अर्थात् 'एकजातिसमन्वित' अर्थात् एक-एक मूर्त्ति, स्नेहादि जाति से युक्त प्रत्येक पृथिव्यादि भूतों की अपने-अपने षड्जादि धर्ममात्र से व्यावृत्ति होती है। इस प्रकार पृथ्वी आदि द्रव्य के मूर्त्ति आदि सामान्य और शब्दादि विशेष धर्म कहे गये हैं।

**बालप्रिया–**

'**स्वसामान्यम्**'–पद का अर्थ है–अपना-अपना सामान्य रूप। जिस भूत का जो सामान्यरूप है, उसे भाष्यकार ने '**मूर्त्तिः**' इत्यादि पदों द्वारा प्रदर्शित किया है। '**मूर्त्तिमती भूमिः, स्नेहवज्जलम्**'–यह कथन सामान्य-विशेष रूप धर्म-धर्मी के अभेद-विवक्षा से है।

सम्प्रति, '**द्रव्य**' के स्वरूप पर विचार किया जा रहा है–

## तत्त्ववैशारदी

**ये चाहुः सामान्यविशेषाश्रयो द्रव्यमिति तान्प्रत्याह–[1]सामान्येति। सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यम्। येऽपि [2]तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः। न च तदपह्नवे तयोराधारो द्रव्यमिति भवति। तस्मात्तदेवास्तु द्रव्यम्। न तु ताभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे, ग्रावभ्यो ग्रावसमुदायादि[3]व च तदाधारमपरं पृथग्विधं [4]शिखरम्। समूहो द्रव्यमित्युक्तम्। तत्र समूहमात्रं द्रव्यमिति भ्रमापनुत्तये समूहविशेषो द्रव्यमिति निर्धारयितुं समूहप्रकारानाह–द्विष्ठो हीति। यस्मादेवं तस्मा[5]न्न समूहमात्रं द्रव्यमित्यर्थः। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः। एकं प्रकारमाह–प्रत्यस्तमितेति। प्रत्यस्तमितो भेदो येषामवयवानां ते तथोक्ताः [6]प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः। एतदुक्तं भवति–शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस्तद्वाचकशब्दाप्रयोगात्समूह एकोऽवगम्यत इति। युतायुतसिद्धावयवत्वेन चेतनाचेतनत्वेन चोदाहरणचतुष्टयम्। युतायुतसिद्धावयवत्वं चाग्रे वक्ष्यते। द्वितीयं प्रकारमाह–शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्या इति। देवमनुष्य इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नावुपात्तौ। ननूभयशब्दात्तदवयवभेदो न प्रतीयते। तत्कथमुपात्तभेदावयवानुगत इत्यत आह–[7]ताभ्यामिति। ताभ्यां [8]भागाभ्यामेव समूहोऽभिधीयते। उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहो वाच्यः, [9]वाक्यस्य वाक्यार्थवाचकत्वादिति भावः। पुनर्द्वैविध्यमाह–स चेति। भेदेन चाभेदेन च विवक्षितः। भेदविवक्षितमाह–आम्राणां वनं ब्राह्मणानां**

---

1. थ द ध–**सामान्येति** उपलभ्यते, क ख ग घ च छ ज झ त न–सामान्येति नोपलभ्यते।
2. क ख ग घ च छ ज झ त ध न–**तदाश्रयः**, थ द–**तदाश्रयम्**।
3. क–**च**, ख ज–**वत्**, ग–**इव**, घ च त थ ध न–**इव च**, छ झ द–**वच्च**।
4. क छ झ–**शिखरसमूहः**, ख ग घ च ज त थ द ध न–**शिखरं समूहः**।
5. क ख ग घ च छ ज झ थ द ध न–**न**, त–**तु**।
6. क ख ग घ च छ ज त थ द ध–**प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः** उपलभ्यते, झ न **प्रत्यस्तमित...तथोक्तः** नोपलभ्यते।
7. थ द ध–**ताभ्यामिति** उपलभ्यते, क ख ग घ च छ ज झ त न–ताभ्यामिति नोपलभ्यते।
8. क ख ग घ च छ झ त थ द ध न–**भागाभ्याम्**, ज–**भेदाभेदाभ्याम्**।
9. क ख ग घ च छ ज झ त थ द ध–**वाक्यस्य** उपलभ्यते, न–**वाक्यस्य** नोपलभ्यते।

**सङ्घ इति। भेद एव षष्ठीश्रुतेः। यथा गर्गाणां गौरिति। अभेदविवक्षितमाह—आम्रवणं ब्राह्मणसंघ इति। आम्राश्च ते वनं चेति समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः। विधान्तरमाह—स पुनर्द्विविध इति। युतसिद्धावयवः समूहः। युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनमिति। सान्तराला हि तदवयवा [1]वृक्षाश्च गावश्च। अयुतसिद्धावयवश्च समूहो वृक्षो गौः परमाणुरिति। निरन्तरा हि तदवयवाः सामान्यविशेषा वा सास्नादयो वेति। तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति—अयुतसिद्धेति। तदेवं प्रासङ्गिकं [2]द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति—एतत्स्वरूपमित्युक्तमिति।**

जो वैशेषिक लोग '**सामान्य-विशेष** का आश्रयभूत द्रव्य होता है'—ऐसा '**द्रव्य**' के विषय में कहते हैं उनके प्रति भाष्यकार का वक्तव्य है—'**सामान्येति**।' इस दर्शन में सामान्य-विशेष के समुदाय को '**द्रव्य**' कहते हैं। जो लोग सामान्य-विशेष के आश्रय को ही द्रव्य मानते हैं, उनके द्वारा भी अनुभव में आने वाले सामान्य-विशेष के समुदाय का अपलाप नहीं किया जा सकता है। किञ्च समुदाय का अपलाप करने पर दोनो (सामान्य तथा विशेष) का आधार '**द्रव्य**' नहीं होता है। इसलिये सामान्य-विशेष का समुदाय ही '**द्रव्य**' माना जाना चाहिये। किञ्च सामान्य-विशेष और उनके समुदाय के अतिरिक्त आधाररूप से किसी दूसरे द्रव्य की उपलब्धि नहीं होती है। जिस प्रकार पाषाणों और उनके समुदाय से अतिरिक्त आधाररूप से किसी दूसरे शिखर की प्रतीति नहीं होती है। इसलिये 'सामान्य-विशेष के समूह' को ही '**द्रव्य**' कहा गया है। कहीं समूहमात्र को ही द्रव्य न समझ लिया जाय अर्थात् समूहमात्र द्रव्य है, इस भ्रान्त अवधारणा के निवारणार्थ 'समूहविशेष द्रव्य है'—इसे निर्धारित करने के लिये भाष्यकार समूह के प्रकारों को बतलाते हैं— '**द्विष्ठो हीति**।' क्योंकि समूह द्विष्ठ (दो में रहने वाला) रहता है, इस कारण से समूहमात्र को द्रव्य नहीं कहा जा सकता है। '**द्विष्ठ**' पद की व्युत्पत्ति है—'**द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः**' अर्थात् जो दो प्रकारों से स्थित रहता है, उसे '**द्विष्ठ**' कहते हैं। इस व्युत्पत्ति के अनुसार समूह दो प्रकार का होता है। भाष्यकार समूह के एक प्रकार को बताते हैं—'**प्रत्यस्तमितेति**।' जिन अवयवों का भेद (पारस्परिक अलगाव) प्रतीत (शब्दों द्वारा प्रकट) नहीं होता है, उनमें अनुगत रहने वाला समूह '**प्रत्यस्तमितभेदावयवानुगत समूह**' कहलाता है। अभिप्राय यह है—शरीर, वृक्ष, यूथ तथा वन—इन शब्दों से प्रतीयमान समूह अप्रतीत (अप्रकट) अवयवभेद वाला होता है, क्योंकि इनमें अवयव के भेद का वाचक शब्दप्रयोग नहीं हुआ है। अतः यह 'एक समूह' रूप से जाना जाता है। युतायुतसिद्धावयवत्व तथा चेतनाचेतनत्व की दृष्टि से ये चार

---

1. क ख ग घ च छ ज झ थ द ध न—**वृक्षाश्च**, त—**वृक्षाः**।
2. क ग घ च छ झ थ द ध न—**द्रव्यम्**, ख ज त—**द्वैविध्यम्**।

उदाहरण ऊपर कहे गये हैं। किञ्च युतायुतसिद्धावयवत्वसमूह को आगे बताया जायेगा। भाष्यकार समूह के द्वितीय प्रकार को प्रतिपादित करते हैं–'**शब्देनोपात्त-भेदावयवानुगतः समूह उभये देवमनुष्या इति**।' अर्थात् शब्द से प्रकटित भेदों वाले अवयवों में अनुगत रहने वाला समूह द्वितीय प्रकार का है। जैसे '**उभये देवमनुष्याः**' इस उदाहरण में '**उभय**' शब्द के वाच्य '**समूह**' के दो भिन्न भाग (अंश) '**देव-मनुष्य**' इस शब्द के द्वारा गृहीत होते हैं। अर्थात् द्विष्ठ 'समूह' का एक अंश देव और दूसरा अंश मनुष्य शब्द से गृहीत है।

**शङ्का**–'**उभय**' शब्द के प्रयोग से '**देव**' और '**मनुष्य**' के अवयवों का भेद तो प्रतीत नहीं होता है, तो फिर कैसे समूह के इस प्रकार को '**उपात्तभेदावयवानुगत**' कहा गया?

**समाधान**–इस पर भाष्यकार कहते हैं–'**ताभ्यामिति**।' यहाँ '**देव**' और '**मनुष्य**' इन दो अवयवों (भागों) से ही '**समूह**' कहा जा रहा है। अर्थात् समूह के देव और मनुष्य ये ही दो अवयव हैं। यहाँ भागद्वयवाची (दो प्रकार के अवयव को बताने वाले) देव और मनुष्य शब्द के साथ '**उभय**' शब्द के प्रयोग से समूह ही वाच्य होता है, क्योंकि वाक्यार्थ का वाचक वाक्य होता है। भाष्यकार (अपर दृष्टि से) '**समूह**' के पुनः दो भेद बताते हैं–'**स चेति**।' किञ्च वह '**द्रव्य**' रूप समूह '**भेद** तथा '**अभेद**' रूप से दो प्रकार से विवक्षित है। जिस समूह से भेद की प्रतीति होती है, उस समूह को भाष्यकार बताते हैं–'**आम्राणां वनं ब्राह्मणानां संघ इति**।' इन दोनों उदाहरणों में षष्ठी विभक्ति (श्रुति) के प्रयोग से आम्र और वन में तथा ब्राह्मण और संघ में भेद ही प्रतीत होता है। जैसे '**गर्गाणां गौः**' अर्थात् 'गर्गों की गाय' इस उदाहरण में 'गर्ग' और 'गौ' का भेद विवक्षित है। अब जिस समूह से अभेद की प्रतीति होती है, उस समूह को भाष्यकार प्रतिपादित करते हैं–'**आम्रवनं ब्राह्मणसंघ इति**।' यहाँ '**आम्राश्च ते वनञ्च आम्रवनं, ब्राह्मणाश्च ते संघश्च ब्राह्मणसंघः**'–यहाँ समूह और समूही में अभेदविवक्षा करके सामानाधिकरण्य किया गया है। (यहाँ कर्मधारयसमास है)। समूह की अपर विधा को भाष्यकार बताते हैं–'**स पुनर्द्विविध इति**।' वह समूह पुनः दो प्रकार का है–युतसिद्धावयवसमूह तथा अयुतसिद्धावयवसमूह। तत्त्ववैशारदीकार 'युतसिद्धावयव समूह' का विग्रह करते हैं–'**युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स इति युतसिद्धावयवः समूहः**' अर्थात् जिसके सावकाश अवयव पृथक् सिद्ध हैं, उसे '**युत-सिद्धावयवसमूह**' कहते हैं। जैसे 'यह यूथ (संघ) है, यह वन है'–यहाँ 'यूथ' समूह के अवयव गौएँ और 'वन' समूह के अवयव वृक्ष सान्तराल अर्थात् पृथक्-पृथक् हैं। अयुतसिद्धावयवसमूह का उदाहरण है–वृक्ष, गौ, परमाणु आदि। इन उदाहरणों में सामान्यविशेष अथवा सास्नादिरूप अवयव सान्तराल (पृथक्) नहीं हैं। अतः ये अयुतसिद्धावयवसमूह वाले हैं। उपरिवर्णित समूहों में से '**द्रव्य**' भूत समूह को

'भाष्यकार निर्धारित करते हैं–'**अयुतसिद्धेति**।' इन समूहों में से जो अयुतसिद्धावयव-भेदानुगत समूह है, वही '**द्रव्य**' है। इस प्रकार प्रसंगतः प्राप्त '**द्रव्य**' का स्वरूप प्रतिपादित करके भाष्यकार प्रकृत विषय को समाप्त करते हैं–'**एतत्स्वरूपमित्युक्तमिति**।' भूतों का यही द्वितीय सामान्य रूप '**स्वरूप**' शब्द से अभिहित है।

**बालप्रिया–**

'**ये चाहुः**'–इस के द्वारा वैशेषिक मत को उपस्थापित किया गया है।

'**ग्रावभ्यः**'–इस शब्द का अर्थ है–**पाषाणेभ्यः**।

'**उभये**'–इस पद का विग्रह है–'**उभाववयवौ येषां ते उभये**।' प्रकृत में ये दो अवयव हैं–'**देवमनुष्या इति**।' यहाँ '**उभय**' शब्दवाच्य समूह के अवान्तरविभाग को '**देव**' और '**मनुष्य**' इन दो शब्दों द्वारा बताया गया है।

'अप्रतीताऽवयवभेद एकः **समूहोऽवगम्यते**'–इस प्रकार अन्वय करना चाहिये। तदर्थ 'तद्वाचकशब्दाऽप्रयोगात्' द्वारा हेतु उपन्यस्त किया गया है।

सम्प्रति, तत्त्ववैशारदीकार भूतों के अन्तिम तीन रूपों की व्याख्या करते हैं–

**तत्त्ववैशारदी**

तृतीयं रूपं विवक्षुः पृच्छति–**अथेति**। **उत्तरमाह तन्मात्रमिति**। [1]**यस्यैकोऽवयवः** [2]परिमाणभेदः परमाणुः, **सामान्यं मूर्तिः**, **शब्दादयो विशेषास्**[3]**तदात्मा**, **अयुतसिद्धा निरन्तरा** येऽवयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः। **यथा च परमाणुः सूक्ष्मं रूपमेवं सर्व-तन्मात्राणि सूक्ष्मं रूपमिति**। उपसंहरति–**एतदिति**।

अथ भूतानां चतुर्थं रूपं **ख्यातिक्रियास्थितिशीला गुणाः** [4]**कार्यस्वभावानुपातिनः कार्य-स्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः**। **अत एवान्वयशब्देनोक्ताः**।

**अथैषां पञ्चमं रूपमर्थवत्त्वं विवृणोति–भोगेति। नन्वेवमपि सन्तु गुणा अर्थवन्तः। तत्कार्याणां तु कुतोऽर्थवत्त्वमित्यत आह–गुणा इति। भौतिका गोघटादयः। तदेवं संयमविषय-मुक्त्वा संयमं तत्फलं चाह–तेष्विति। भूतप्रकृतयः भूतस्वभावाः॥४४॥**

भूतों के तृतीय रूप की व्याख्या करने की इच्छा से प्रश्न किया जा रहा है–'**अथेति**।'

**शङ्का**–इन पञ्चभूतों का '**सूक्ष्म**' रूप क्या है?

**समाधान**–भाष्यकार उत्तर देते हैं–'**तन्मात्रमिति**।' पञ्चतन्मात्र पञ्चभूतों का कारण है। उसका एक अवयव अर्थात् परिमाणभेद '**परमाणु**' है, जो मूर्त्ति आदि '**सामान्य**' और

---

1. क क ग घ च छ ज झ त थ द ध–**तस्य, न यस्य**।
2. क ख ग घ च छ न–**परिमाण**०, ज झ त थ द ध–**परिणाम**०।
3. क ख ग घ च छ झ त थ द ध न–**तदात्मा**, ज–**तदात्मानः**
4. थ द ध–**कार्यस्वभावानुपातिनः** उपलभ्यते, क ख ग घ च छ ज झ त न–**कार्य**...नोपलभ्यते।

शब्दादि '**विशेष**' स्वरूप वाला है, जिसके सामान्य-विशेष रूप अवयव निरन्तर अर्थात् अयुतसिद्ध हैं, ऐसे भेदों में अनुगत रहने वाला '**समूह**' है। इससे जैसे परमाणु भूतों का '**सूक्ष्म**' रूप है, वैसे ही तन्मात्राएँ भी '**सूक्ष्म**' रूप हैं। भाष्यकार भूतों के तृतीय रूप का उपसंहार करते हैं–'**एतदिति**।' यह पञ्चतन्मात्र पञ्चभूतों का तृतीय '**सूक्ष्म**' रूप है।

भाष्यकार भूतों के चतुर्थ रूप को प्रतिपादित करते हैं–'**अथेति**।' भूतों का चतुर्थ रूप ख्याति (प्रकाश), क्रिया (प्रवृत्ति) स्थिति (नियमन) स्वभाव वाले '**गुण**' हैं, जो (महत् से लेकर महाभूतपर्यन्त) कार्य में स्वभावतः अन्वित रहते हैं अर्थात् जो कार्यानुपाती हैं। अत एव भूतान्वित (कार्यान्वित) ये गुण '**अन्वय**' (भूतों के चतुर्थरूप से) शब्द से पुकारे जाते हैं।

भाष्यकार भूतों के पंचम रूप '**अर्थवत्त्व**' का विवरण करते हैं–'**भोगेति**।' पुरुष के लिये भोग तथा अपवर्ग का सम्पादनरूप '**अर्थवत्त्व**' सत्त्वादि गुणों में ही अनुगत (उपलब्ध) होता है।

**शङ्का**–ठीक है, इस प्रकार गुणों को ही **अर्थवान्** माना जाय, तब गुणों के कार्य भूतों को '**अर्थवत्त्व**' धर्म वाला क्यों माना गया?

**समाधान**–इस पर भाष्यकार कहते हैं–'**गुणा इति**।' ये गुण तन्मात्र के कार्यभूत पृथिव्यादि भूतों और गो, घटादि पदार्थों में अनुगत रहते हैं। अत एव सभी भूत-भौतिक पदार्थ '**अर्थवत्त्व**' अर्थात् प्रयोजनवत्त्व हैं। इस प्रकार संयम के विषय को प्रतिपादित करके भाष्यकार संयम और तज्जन्य फल को बताते हैं–'**तेष्विति**।' भाष्य में प्रयुक्त '**भूतप्रकृति**' शब्द का अर्थ है–भूतस्वभाव॥४४॥

**बालप्रिया**–

'**भोगापवर्गार्थता गुणेष्वन्वयिनी**'–भाव यह है–यद्यपि शब्दादि उपलब्धि और विवेकख्यातिसंज्ञक भोगापवर्गरूप पुरुषार्थ चित्त के ही हैं, तथापि प्रलयकाल में ये (पुरुषार्थ) गुणों में अनागतावस्थाक वासनारूप से अवस्थित रहते हैं। इसलिये भोगापवर्गार्थता को '**गुणान्वयिनी**' कहा गया है।

'**इदानीम्भूतेषु**'–जिज्ञासा है कि भाष्यकार ने '**इदानीम्**' का प्रयोग क्यों और किस अर्थ में किया है? उत्तर है–तन्मात्राओं में सूत्रकथित '**स्थूलादि**' पंच रूपों का अभाव रहता है, इसलिये स्थूल भूतों में ही स्थूलादि रूपों की स्थिति बतलाने के लिये भाष्य में '**इदानीम्भूत**' शब्द का प्रयोग किया गया है॥४४॥

## योगवार्त्तिकम्

**तदेवं परिणामत्रयसंयमादित्यारभ्योच्चावचविषयकसंयमानां ज्ञानक्रियारूपाः सिद्धय उक्ताः। इदानीं वितर्कविचारेत्यादिसूत्रैः स्वशास्त्रे मुख्यतः प्रकृतेषु ग्रहीतृग्रहणग्राह्येषु ये**

संयमास्तेषां सिद्धयो वक्तव्याः। तत्र ग्रहीतृग्रहणयोः ग्राह्य[1]निरूप्यत्वादादौ ग्राह्यविषयकसंयमस्य सिद्धिमाह–स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः। स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि, तेषु संयमात्साक्षात्कारपर्यन्तात्तत्तद्रूपाणां जयो वशवर्त्तिता भवतीत्यर्थः। स्थूलं व्याचष्टे–तत्रेति। सामान्यविशेषसमूहरूपाणां पृथिव्यादिपञ्चभूतानाम् एकदेशाः शब्दादयो विशेषाः, धर्मधर्म्यभेदात् तद्वन्तः पदार्था वक्ष्यमाणैरा[2]कारादिधर्मैः सह स्थूलशब्देन शास्त्रे परिभाषिता इत्यर्थः। तन्मात्रव्यावर्त्तनाय विशेषपदम्। ते च विशेषाः षड्जगान्धारादयः शीतोष्णादयो [3]नीलपीतादयो मधुराम्लादयः सुरभिदुर्गन्धादयश्चेति। एते हि नामकर्मभिरवान्तरं विभज्यन्त इति विशेषाः। आकारादयश्च धर्माः पृथिव्यादीनां क्रमेण शास्त्रे परिपठिताः। यथा–

आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च ।
वृत्तिर्भेदः क्षमा कार्श्यं काठिन्यं सर्वभोग्यता ॥
स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् ।
शैत्यं रक्षा पवित्रत्वं संधानं चौदका गुणाः ॥
ऊर्ध्वभाक् पाचकं दग्धृ पावकं लघु भास्वरम् ।
प्रध्वंस्योजस्वि वै तेजः [4]पूर्वेभ्यो भिन्नलक्षणम् ॥
तिर्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम् ।
चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः ॥
सर्वतो गतिरव्यूहोऽविष्टम्भश्चेति ते त्रयः ।
आकाशधर्मा व्याख्याता पूर्वपूर्वविलक्षणाः ॥इति।

आकारोऽवयवसंस्थानम्, वृत्तिः सर्वभूताधारता, भेदो विदारणम्, क्षमा सहिष्णुता, धारणसामर्थ्यमिति यावत्, रक्षा=आवरणादिना रक्षकत्वम्, आक्षेपः पातनम्, सर्वतोगतिर्विभुत्वम्, अव्यूहः सर्व[5]पदानां प्रविरलीकरणम्, अविष्टम्भोऽवकाश इति। प्रथमं रूपमिति। सूत्रोक्तं पञ्चरूपेष्वाद्यं रूपमित्यर्थः।

इस प्रकार 'परिणामत्रयसंयमात्' (३/१६) सूत्र से प्रारम्भ करके विभिन्नविषयक संयमों की 'ज्ञानरूपा' और 'क्रियारूपा' सिद्धियाँ वर्णित हुईं। अब उन सिद्धियों को प्रतिपादित किया जाना है जो 'वितर्कविचार' (१/१७) इत्यादि सूत्रों द्वारा प्रकृत योगशास्त्र में मुख्यरूप से ग्रहीतृ, ग्रहण और ग्राह्यविषयक संयम वाली कही गईं हैं।

---

1. क ख घ च छ–निरूप्यत्वात्, ग–निरूप्य।
2. क च छ–आकारादि०, ख–आकारादिभिः, ग–आकाशादि०, घ–आकारत्वात्।
3. ख ग घ च–नीलपीतादयः उपलभ्यते, क छ–नीलपीतादयः नोपलभ्यते।
4. क ख ग घ–पूर्वाभ्यां, च–पूर्वाभ्यः, छ–पूर्वेभ्यः।
5. क ख ग घ च–पदार्थानां, छ–पदानाम्।

इनमें भी ग्रहीतृ और ग्रहणविषयक संयमों में ग्राह्यनिरूप्यता होने से ग्राह्यविषयक संयम की सिद्धि को भाष्यकार सर्वप्रथम कहते हैं–'**स्थूलेति**।' **स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेति**–इस विग्रह के अनुसार भूतों के स्थूल, स्वरूप, सूक्ष्म, अन्वय और अर्थवत्त्वसंज्ञक पाँच रूपों में साक्षात्कारपर्यन्त संयम करने से भूतों के तत्तद् रूपों की वशवर्तिता (स्वायत्तीकृतता) प्राप्त होती है। भाष्यकार भूतों के प्रथम '**स्थूल**' रूप का वर्णन करते हैं–'**तत्रेति**।' सामान्यविशेषात्मक समूह वाले पृथिव्यादि पञ्चभूतो का शब्दादिविशेष वाला एकदेश (एक भाग) है। धर्म-धर्मी का अभेद होने से शब्दादियुक्त पृथिव्यादि पदार्थ योगशास्त्र में वक्ष्यमाण आकारादि धर्मों के साथ '**स्थूल**' शब्द से परिभाषित हैं। पञ्चमहाभूतगत शब्दादि को शब्दतन्मात्रादि से व्यावृत्त (पृथक्) करने के लिये भाष्य में (शब्दादयः के साथ) '**विशेष**' पद का प्रयोग हुआ है। पञ्चमहाभूतगत ये '**विशेष**' षड्जगान्धारादि, शीतोष्णादि, नीलपीतादि, मधुर-अमलादि तथा सुरभि-दुर्गन्धादिरूप वाले हैं। नाम और क्रिया की दृष्टि से ये अवान्तर विभक्त हैं, अतः '**विशेष**' पदवाच्य हैं। शास्त्र में पृथिव्यादि भूतों के आकारादि धर्म क्रमशः पढे गये हैं। वह जैसे–'**आकारो... पूर्वपूर्वविलक्षणाः**।' 'आकार' शब्द का अर्थ अवयवसंस्थान (अवयवों का सन्निवेश) है। '**वृत्ति**' सर्वभूतों के आधार को कहते हैं। '**भेद**' शब्द का अर्थ विदारण (विदीर्ण होना) है। सहिष्णुता को '**क्षमा**' कहते हैं। यह '**क्षमा**' धारणसामर्थ्यरूप वाली है। '**रक्षा**' शब्द का अर्थ आवरणादि से रक्षित होना है। पतन को '**आक्षेप**' कहते हैं। विभुत्व अर्थात् सब जगह व्याप्त रहने को '**सर्वतोगति**' कहते हैं। समस्त पदार्थों के पृथकीकरण (प्रविरलीकरण) को 'अव्यूह' कहते हैं। अनवरोध (अविष्टम्भ) को '**अवकाश**' कहते हैं। वार्त्तिककार आगे के भाष्य को उठाते हैं–'**प्रथमं रूपमिति**।' इस प्रकार सूत्र में निर्दिष्ट भूतों के पाँच रूपों में से यह पहला '**स्थूल**' रूप है।

भूतों के क्रमप्राप्त द्वितीय रूप '**स्वरूप**' का वर्णन किया जा रहा हैं–

## योगवार्त्तिकम्

**स्थूलं व्याख्याय स्वरूपं व्याचष्टे–द्वितीयं रूपमिति।** स्वसामान्यमिति साधारणं लक्षणम्। **कस्य किं सामान्यं तद्दर्शयति–मूर्त्तिर्भूमिरित्यादिना। मूर्त्तिः** सांसिद्धिकं काठिन्यं तद्व्यङ्ग्या **पृथिवीत्वजातिः, कार्यरूपेणाकाशस्याप्यनेकत्वादिति।** अत्र सामान्यविशेषयोरभेदप्रतिपादनाय **मूर्त्तिर्भूमिरित्याद्यभेदनिर्देशः। कस्य विशेषस्येदं सामान्यमित्याकांक्षायामाह–अस्येति।** शब्दादयः **पूर्वोक्ताः स्थूलतारमन्दादिभेदेन सामान्यस्य** जातेरेकदेशाद्व्यावर्त्तकतया **विशेषा** इत्यर्थः। अत्र **पूर्वाचार्यसंवादमाह–तथा चोक्तमिति।** एकजातिसमन्वितानामेषां पृथिव्यादीनां शब्दादि-**धर्ममात्रेण व्यावृत्तिः** सजातीयान्तरादित्यर्थः। **एकजातिसमन्वितानामिति** समूहे समूहि-**वृत्त्यभिप्रायेण प्रयोगः।**

(भूतों के प्रथम रूप) '**स्थूल**' की व्याख्या करके भाष्यकार उसके द्वितीय रूप '**स्वरूप**' का वर्णन करते हैं–'**द्वितीयं रूपमिति**।' '**स्वसामान्य**' यह '**स्वरूप**' पद का साधारण लक्षण है। अर्थात् प्रत्येक भूत का अपना-अपना साधारण धर्म '**स्वरूप**' कहलाता है। किस भूत का कौन सा सामान्य धर्म है, इसे भाष्यकार प्रदर्शित करते हैं–'**मूर्ति-भूमिरित्यादिना**।' नैसर्गिक कठोरता (कोमलत्वाभाव) को '**मूर्त्ति**' कहते हैं। इससे पृथिवीत्वजाति ध्वनित (अभिव्यञ्जित) होती है। अर्थात् तत्तद् भूतों में स्व-स्व जाति है। एक होते हुए भी आकाश में आकाशत्वजाति है, क्योंकि कार्यरूप से आकाश भी अनेक है। (भाव यह है कि मूर्त्ति से पृथिवीत्वजाति, स्नेह से जलत्व-जाति, उष्णता से वह्नित्वजाति, प्रवहणशीलता से वायुत्वजाति तथा सर्वतोगति से आकाशत्वजाति उपलक्षित होती है। वार्त्तिककार स्पष्ट कर रहे हैं कि यद्यपि विभु होने से आकाश एक है और सामान्य=जाति अनेक में रहने वाला सामान्य धर्म है, तथापि कार्यरूप से आकाश अनेक है। इससे आकाश में आकाशत्वजाति रहने में भी कोई बाधा नहीं है)। यहाँ '**सामान्य**' और '**विशेष**' का अभेद प्रतिपादित करने के लिये भाष्यकार ने '**मूर्तिर्भूमिः**' इस प्रकार (सामानाधिकरण्य से) जाति और व्यक्ति का अभेद निर्दिष्ट किया है। किन विशेषों (व्यक्तियों) के ये सामान्यरूप हैं, ऐसी आकांक्षा होने पर भाष्यकार कहते हैं–'**अस्येति**।' आकाशादि भूतों के पूर्ववर्णित शब्दादियों को '**विशेष**' इसलिये कहते हैं, क्योंकि वे स्थूल, तार, मन्दादिभेद से सामान्यरूप जाति के एकदेश (एक भाग) के व्यावर्तक होते हैं। अर्थात् अनेकानु-गतत्त्व से हट कर व्यक्तिरूप विशेष में रहते हैं। भाष्यकार इस विषय में पूर्वाचार्य के वाक्य को प्रस्तुत करते हैं–'**तथा चोक्तमिति**।' '**भूतत्व**' नाम की एक जाति से समन्वित इन पृथिव्यादियों की शब्दादि धर्ममात्र से व्यावृत्ति होती है, क्योंकि उनमें पृथ्वीत्वादि सजातीयान्तर है। '**एकजातिसमन्वितानाम्**' पद का प्रयोग समूह में समूही के विद्यमान रहने के अभिप्राय से हुआ है।

सम्प्रति, योगसम्मत '**द्रव्य**' की मान्यता को दर्शनान्तर के परिप्रेक्ष्य में स्पष्ट किया जा रहा है–

### योगवार्त्तिकम्

**[1]यत्तु वैशेषिकाः सामान्यविशेषयोराश्रयमेव द्रव्यं मन्यन्ते न तु तयोरभेदमपि, तन्म-ताद्विविच्य स्वसिद्धान्तमा[2]ह–सामान्येति। अत्र दर्शने सामान्यविशेषयोः समूहो द्रव्यम्, अतिरिक्तावयव्यभ्युपगमेऽपि तयोरभेदस्याप्यभ्युपगमात्। अन्यथा घटो मृत् तन्तुः पटः शुक्लः पट इत्याद्यभेदप्रत्ययानुपपत्तेरित्यर्थः। ननु समूहमात्रस्य द्रव्यत्वे वनस्याप्येकद्रव्यत्वापत्तिरि-**

---

1. क घ च छ–**ये तु**, ख ग–**यत्तु**।
2. क घ च छ–**आह**, ख ग–**दर्शयति**।

**त्याशङ्कां परिहर्तुमादौ समूहस्य द्वैविध्यमाह–द्विष्ठो हीति। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः। तत्रैकं प्रकारमाह–प्रत्यस्तमितेति। प्रत्यस्तमितः शब्देनानुपस्थापितो भेदोऽवान्तरविभागो येषामवयवानां तादृशेष्ववयवेष्वनुगत इत्यर्थः। तस्योदाहरणचतुष्कमाह–शरीरमिति। आद्यं द्वयमेकद्रव्यरूपस्य समूहस्योदाहरणमन्त्यद्वयमनेकद्रव्यरूपसमूहस्येति भेदः, यूथादौ च विशिष्टस्यातिरिक्तत्वाभिप्रायेणावयवानुगतत्वमुपपादनीयम्। द्वितीयं समूहस्य प्रकारमाह–शब्देनोपात्तेति। अस्योदाहरणम्–उभयेति। अत्रोभयशब्दवाच्यस्य समूहस्यावान्तरभेदौ देवमनुष्यशब्दाभ्यामुपात्तौ, बहुवचनाभ्यां च तयोरप्यनेकभेदा उपात्ता इति। शब्देनोपात्तभेदत्वं संक्षेपात् स्वयमाह–[1]समूहरूपस्य देवा इति। भागो भेदः, ताभ्यां भेदाभ्याम्। स चेति। स च द्विविधोऽपि समूहो भेदाभेदाभ्यां प्रयोक्तृभिर्विवक्षितो भवति, आम्राणां वनमिति षष्ठ्या भेदेन, आम्रवणमिति च कर्मधारयादभेदेन विवक्षा। एवमन्यत्रापि। तथा च समूहसमूहिनोर्भेदाभेदौ स्त इति प्रतिपादितम्।**

और जो वैशेषिक लोग '**सामान्य**' और '**विशेष**' के आश्रय को ही '**द्रव्य**' मानते हैं, न कि उनमें अभेद को भी स्वीकार करते हैं, उनके मत को योगमत से पृथक् करते हुए भाष्यकार योगसम्मत सिद्धान्त को प्रस्तुत करते हैं–'**सामान्येति**।' योगदर्शन में '**सामान्य**' और '**विशेष**' के समूह को '**द्रव्य**' कहते हैं। इस समूहात्मक द्रव्य को अतिरिक्त अवयवी के रूप से स्वीकार करने पर भी अवयव-अवयवी का अथवा समूह-समूही का अभेद भी अङ्गीकृत हो जाता है। अन्यथा **घटो मृत्, तन्तुः पटः, शुक्लः पटः** अर्थात् 'मृन्मय घट, तन्तुमय पट, शुक्लवर्णमय पट'–इत्याकारक धर्म-धर्मी की अभेद-प्रतीति उपपन्न न हो सकेगी।

**शङ्का**–समूहमात्र को द्रव्य मानने पर वन को भी वृक्ष से पृथक् द्रव्य मानने की विसंगति आयेगी?

**समाधान**–उपरिनिर्दिष्ट शंका का परिहार करने के लिये भाष्यकार समूह के द्वैविध्य को सर्वप्रथम बताते हैं–'**द्विष्ठो हीति**।' '**समूह**' द्विष्ठ होता है। **द्विष्ठ** पद की व्युत्पत्ति है–'**द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः**' अर्थात् जो दो प्रकार से अवस्थित रहता है, उसे '**द्विष्ठ**' कहते हैं। इन दो प्रकार के समूहों में से प्रथम प्रकार के समूह को भाष्यकार बताते हैं–'**प्रत्यस्तमितेति**।' जिन अवयवों का अवान्तरविभाग (भेद) '**प्रत्यस्तमित**' शब्द के द्वारा उपस्थित नहीं रहता है, उस प्रकार के अवयवों में अनुगत रहने वाला यह प्रथम प्रकार का **समूह**' है। अर्थात् अवान्तरविभाग के बोधक शब्द का प्रयोग न होने से जिन अवयवों का भेद ज्ञापित नहीं होता है, उसे '**प्रत्यस्तमितभेदावयवानुगत समूह**' कहते हैं। भाष्यकार प्रथम प्रकार के समूह के चार उदाहरण प्रस्तुत करते हैं–

---

1. क ख ग–**समूहस्य**, घ–**समूहरूप०**, च छ–**समूहरूपस्य**।

'**शरीरमिति**।' इन चार प्रकार के शरीर, वृक्ष, यूथ और वन–उदाहरणों में से प्रथम दो उदाहरण शरीर और वृक्ष एक द्रव्यरूप समूह के हैं तथा अन्तिम दो उदाहरण यूथ और वन अनेक द्रव्य रूप समूह के हैं। यही प्रथम दो उदाहरणों का अन्तिम दो उदाहरणों से भेद है। यूथादि उदाहरणों में विशिष्ट को अतिरिक्त मानकर ही समूहरूप द्रव्य का अवयवों में अनुगत रहना उपपन्न नहीं होता है। भाष्यकार समूह के द्वितीय प्रकार को बताते हैं–'**शब्देनोपात्तेति**।' शब्द से गृहीत भेदावयवानुगत समूह द्वितीय प्रकार का है। **शब्दोपात्तभेदावयवानुगत समूह** का उदाहरण है–'**उभयेति**।' यहाँ '**उभय**' शब्दवाच्य समूह के अवान्तरभेद देव और मनुष्य शब्द से गृहीत (उपात्त) हैं। किञ्च '**देवमनुष्याः**' इत्यादि बहुवचन से उन दोनों के भी अनेक भेद गृहीत (उपात्त) हैं। भाष्यकार स्वयं समूह के शब्दोपात्तभेद को संक्षेप में बताते हैं–'**समूह-रूपस्य देवा इति**।' यहाँ '**भाग**' शब्द का अर्थ '**भेद**' है। इस प्रकार '**उभये देवमनुष्याः**' उदाहरण में शब्दोपात्तभेद वाला समूह देव और मनुष्य इन दो भेदों से गृहीत होता है। वार्त्तिककार आगे के भाष्य को उठाते हैं–'**स चेति**।' उक्त दो प्रकार का समूह प्रयोगकर्त्ताओं द्वारा भेद और अभेद के रूप से विवक्षित होता है। जैसे 'आम्राणां वनम्' में षष्ठी विभक्ति से आम्र और वन का भेद विवक्षित है तथा 'आम्रवणम्' में कर्मधारय समास (**आम्राश्च ते वनञ्च आम्रवनम्**) द्वारा आम्र और वन का अभेद विवक्षित है। इसी प्रकार अन्य उदाहरणों में भी '**समूह**' का अन्तर समझ लेना चाहिये। इस विवेचन से यह सिद्धान्तित होता है कि समूह और समूही में भेद और अभेद दोनों हैं।

सम्प्रति, '**समूह**' के एक अन्य प्रकार का स्वरूप बताया जा रहा है–

## योगवार्त्तिकम्

**स पुनरिति। द्विविधोऽपि समूहः पुनर्द्विविधो भवति। द्वैविध्यमेवाह–युतेति। हालिका-दिष्वपि संयुक्ततया संबद्धतया सिद्धा अवयवा यस्य समूहस्य यूथवनादेः स तथा। अयुतेति। अयुतसिद्धावयवः समूहः संघातस्तस्य विवरणम्–शरीरमित्यादि। लौकिकेष्वसंयुततया एकी-भावेनैव सिद्धा अवयवा यस्य समूहस्य शरीरवृक्षादेः, स तथेत्यर्थः। परमाणुरिति। परमाणू-नामपि पञ्चचतुरादितन्मात्रसमूहताया वक्ष्यमाणत्वादिति भावः। तदेवं समूहभेदान् प्रदर्श्य तेष्ववयविद्रव्यरूपं समूहं विशिष्यावधारयति–अयुतेति। संयोगविशेषावच्छिन्नेष्ववयवविशेषे-ष्वनुगतः सामान्यविशेषसमूहोऽवयव्याख्यं द्रव्यमित्यर्थः। अवयवसाधारणं तु सामान्यतो द्रव्यल-क्षणं सामान्यविशेषसमुदायत्वमात्रमिति। उपसंहरति–एतत्स्वरूपमित्युक्तमिति। एतत्सामान्यं स्वरूपशब्देन परिभाषितमित्यर्थः। स्वरूपपरिभाषा च स्थिरतामात्रेण विशेषा ह्यागमापायितया न द्रव्यस्य स्वरूपाणीति। यत्तु पूर्वपादे स्थूलस्वरूपे एकीकृत्यावयविद्रव्यमेव वितर्कानुगतयोगस्य विषयः स्थूलमित्युक्तं तल्लौकिकस्थूलव्यवहारानुसारेण। अत्र तु तान्त्रिकव्यवहारेण तस्यैव**

**द्विधा विभागः। एवमेव विचारानुगतविषयस्य सूक्ष्मस्यैवात्र सूक्ष्मादित्रैविध्यं वक्ष्यतीति द्रष्टव्यम्।**

वार्त्तिककार आगे का भाष्य उठाते हैं—'**स पुनरिति।**' उपरिवर्णित दो प्रकार का समूह पुनः दो प्रकार का है। समूह के उन दो प्रकारों को भाष्यकार कहते हैं—'**युतेति।**' कृषक आदियों की बुद्धि के विषय बनने से भी जिस समूह के अवयव सिद्ध होते हैं अर्थात् समूह के वे अवयव जो सर्वबुद्धिगम्य होते हैं, इस प्रकार के अवयवों का समूह '**युतसिद्धावयवसमूह**' कहलाता है। भाष्यकार समूह के द्वितीय प्रकार को बताते हैं—'**अयुतेति।**' अयुतसिद्धावयवसमूह अवयवसंघात वाला अर्थात् **अस्फुट** अवयव वाला होता है। इसका उदाहरण (विवरण) है—'**शरीरमित्यादि।**' सांसारिक मनुष्यों की बुद्धि में, असंयुक्त होते हुए भी, एकीभांव से ही प्रतीत होने वाला अवयव जिस शरीर, वृक्षादि समूह का होता है, वह '**अयुतसिद्धावयवसमूह**' कहलाता है। वार्त्तिककार आगे के भाष्य को उठाते हैं—'**परमाणुरिति।**' परमाणुओं को भी पञ्च, चतुरादि तन्मात्राओं के समूह रूप से आगे बताया जायेगा। इस प्रकार समूह के भेदों को प्रदर्शित करके भाष्यकार उनमें से अवयविद्रव्यरूप '**समूह**' को विशेष रूप से निर्धारित करते हैं—'**अयुतेति।**' संयोगविशेष से अवच्छिन्न अवयवविशेषों में अनुगत रहने वाला जो सामान्यविशेषात्मक समूह है, वही '**अवयवी**' संज्ञक '**द्रव्य**' कहलाता है। जो 'अवयव साधारण' द्रव्य का सामान्य लक्षण है, वह '**सामान्यविशेषसमुदायत्वमात्र**' रूप है। इस प्रकार '**द्रव्य**' का लक्षण करने के पश्चात् भाष्यकार भूतों के द्वितीय **स्वरूपाख्य**' रूप को उपसंहृत करते हैं—'**एतत्स्वरूपमित्युक्तमिति।**' भूतों का वह दूसरा सामान्यरूप सूत्र में '**स्वरूप**' शब्द से परिभाषित है। यहाँ स्थिरता मात्र से ही स्वरूप को परिभाषित किया गया है, क्योंकि आगमापायि (उत्पत्ति-विनाशशील) '**विशेष**' को द्रव्य का स्वरूप नहीं कहा जा सकता है और जो पूर्वपाद में '**स्थूल**' और '**स्वरूप**' को मिलाकर (एकीकृत करके) बने हुए अवयविरूप '**द्रव्य**' को ही '**स्थूल**' शब्द से वितर्कानुगत सम्प्रज्ञात योग का विषय कहा गया है, वह '**स्थूल**' शब्द के लौकिक व्यवहार के अनुसार है। अर्थात् कारण की दृष्टि से कार्य के '**स्थूल**' होने के अभिप्राय से कहा गया है। किन्तु यहाँ तान्त्रिक व्यवहार (शास्त्रीय पद्धति) से समूहात्मक द्रव्य का ही दो प्रकार से विभाग किया गया है। इसी प्रकार भाष्यकार यहाँ विचारानुगत समापत्ति के विषयभूत '**सूक्ष्म**' पदार्थ का ही सूक्ष्मादिरूप से त्रैविध्य-प्रतिपादन करेंगे।

सम्प्रति, भूतों के यथाक्रम तृतीय रूप '**सूक्ष्म**' का विश्लेषण किया जा रहा है—

### योगवार्त्तिकम्

**स्वरूपं व्याख्याय सूक्ष्मं व्याख्यातुं पृच्छति—अथेति। एषां भूतानाम्। उत्तरम्—तन्मात्र-**

मिति। तत्र **सूक्ष्मपरिभाषाबीजमाह–भूतकारणमिति। साक्षात्कारणत्वमेव हि सूक्ष्मत्वमत्र विवक्षितमित्याशयः। भूतकारणत्वप्रकारं दर्शयति–तस्येति। तस्य भूतस्य एकश्चरमोऽवयवः परमाणुः, सोऽपि च घटादिवदेव सावयवः, अन्यथा स्थूलत्वानुपपत्तेः, शान्तघोरमूढत्वरूपविशेषानुपपत्तेश्च, इत्येवमित्यतः सर्वतन्मात्राण्येव भूतकारणानि, अवयवान्तरासंभवादित्यर्थः। उपसंहरति–एतत्तृतीयमिति। अथेति। एतत्तन्मात्रं तृतीयं भूतानां रूपमित्यर्थः।**

भूतों के द्वितीय स्वरूपाख्य रूप की व्याख्या करके भाष्यकार उसके तृतीय रूप का व्याख्यान करने के लिये प्रश्न करते हैं–'**अथेति**।'

**शङ्का**–भूतों का सूक्ष्माख्य रूप किस प्रकार का है?

**समाधान**–भाष्यकार उत्तर देते हैं–'**तन्मात्रमिति**।' भाष्यकार तन्मात्राओं की '**सूक्ष्म**' संज्ञा के कारण को बतलाते हैं–'**भूतकारणमिति**।' यहाँ साक्षात् कारण को ही '**सूक्ष्म**' माना गया है। अर्थात् जो कार्य का साक्षात् कारण होता है, उसे '**सूक्ष्म**' कहते हैं। इस परिभाषा के अनुसार महाभूत के साक्षात् कारण तन्मात्र को सूक्ष्म कहा गया है। अब किस प्रकार पञ्च तन्मात्र पञ्च महाभूत का कारण है, इसे भाष्यकार प्रदर्शित करते हैं–'**तस्येति**।' भूत का एक चरम (अन्तिम) अवयव '**परमाणु**' है, किन्तु वह भी घटादि की भाँति सावयव है। यदि '**परमाणु**' को सावयव न माना जाय तो परमाणु का स्थूलत्व उपपन्न न हो सकेगा तथा उसका शान्तत्व, घोरत्व तथा मूढत्वरूप '**विशेष**' संज्ञक होना भी सिद्ध न हो पायेगा। इसलिये तन्मात्राओं को ही भूतों का कारण कहा गया है, क्योंकि उनमें अवयवान्तरत्व अर्थात् सावयवत्व असम्भव है। भाष्यकार भूतों के तृतीय रूप को उपसंहृत करते हैं–'**एतत्तृतीयमिति**।' आगे का भाष्य है–'**अथेति**।' इस प्रकार पञ्चतन्मात्र पञ्च महाभूतों का सूक्ष्माख्य तृतीय रूप है। (इस प्रकार भूतों के तृतीय '**सूक्ष्म**' रूप की व्याख्या समाप्त होती है)।

**बालप्रिया–**

**शान्तघोरमूढत्वरूपविशेषानुपपत्तेः**'–सांख्यकारिका में स्पष्ट रूप से बतलाया गया है कि भूतों में शान्तत्वादि रूप की स्फुटता तथा तन्मात्राओं में शान्तत्वादि रूप की अस्फुटता के कारण ही भूत तथा तन्मात्र को '**विशेष**' और '**अविशेष**' संज्ञा से यथाक्रम परिभाषित किया गया है। तदर्थ कारिका द्रष्टव्य है–

**एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च।**
**तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः॥**

सम्प्रति, भूतों के '**अन्वय**' धर्म पर विचार किया जा रहा है–

## योगवार्त्तिकम्

**अन्वयाख्यं चतुर्थं रूपं व्याचष्टे–अथेति। अथानन्तरमुच्यत इति शेषः। त्रिविधा गुणा** एवान्वयशब्देनोक्ताः, **तत्र हेतुः– कार्यस्वभावानुपातिन इति। कार्यरूपो यः स्वीयो भा**ः

**स्वात्मकः पदार्थः तत्रानुगता अतोऽन्वया इत्यर्थः। ननु भूतेषु प्रख्याशीलस्य सत्त्वस्यानुगमे किं प्रमाणमिति चेत्? अन्नमयं हि सौम्य मन इत्यादिश्रुतयोऽन्वयव्यतिरेकौ चेति प्रतीहि। प्रकाशात्मकतया सात्त्विकानि हि मनश्चक्षुरादीन्यन्नरसाद्युपचयापचयाभ्यामुपचयापचयवन्ति दृश्यन्ते, अतः पृथिव्यादिभूतेषु मनआदिकं तदुपष्टम्भकसत्त्वं वाऽनुगतमित्युन्नीयत इति।**

सम्प्रति, भाष्यकार भूतों के चतुर्थ अन्वयाख्य रूप की व्याख्या करते हैं–'**अथेति**।' '**अथ**' शब्द आनन्तर्यवाची है। अतः भूतों के तृतीय रूप के अनन्तर चतुर्थ रूप को बतलाया जा रहा है, ऐसा वाक्यशेष है। सूत्र में '**अन्वय**' शब्द से त्रिविध '**गुण**' ही अभिहित हुए हैं। त्रिविध गुणों को भूतों का अन्वयाख्य रूप बतलाये जाने का कारण यह है–'**कार्यस्वभावानुपातिन इति**।' कार्यात्मक रूप में स्वकीय अवस्थिति (भाव) वाला तदात्मक पदार्थ कारण होता है। अतः कार्य में तदात्मक कारण का अनुगत रहना ही अन्वयाख्य रूप है। अतः गुण को '**अन्वय**' शब्द से कहा गया है।

**शङ्का**–भूतों में प्रकाशस्वभाव वाला सत्त्वगुण अन्वित रहता है, इसमें क्या प्रमाण है?

**समाधान**–वार्त्तिककार उत्तर देते हैं कि **अन्नमयं हि सोम्य मनः**' (छा.उप. ६/५/४) इत्यादि श्रुति-स्मृतियाँ तथा अन्वयव्यतिरेक ही इसमें प्रमाण है। जैसे प्रकाशात्मक होने से सत्त्वगुणप्रधान मन तथा चक्षुरादि इन्द्रियाँ अन्नरसादि के न्यूनाधिक प्रयोग से वृद्धि और ह्रास को प्राप्त होती हुई देखी जाती हैं। अतः पृथिव्यादि भूतों में मन आदि अथवा उनका प्रेरक सत्त्वगुण विद्यमान रहता है, ऐसा अनुमित होता है॥

### योगवार्त्तिकम्

**पञ्चमं रूपमाह–अथैषामिति। गुणेषु वर्तमानं यद्भोगापवर्गजातं भोगविवेकख्यातिरूपं तदेव पञ्चमं रूपमर्थवत्त्वाख्यमित्यर्थः। नन्वेवं गुणेषु वर्त्तमानमर्थवत्त्वं कथं भूतानां रूपं स्यात्तत्राह–गुणास्तन्मात्रेति। ननु भोगापवर्गौ शब्दाद्युपलब्धिविवेकख्याती, ते चान्तःकरण एव वर्तेते न साक्षाद् गुणेष्विति चेत्? अनागतावस्थया वासनारूपेण वा तयोरपि प्रलयकाले गुणेष्वेवावस्थानात्, कारणक्रमेणैव कार्येष्वनुगतयोरभिव्यक्तेरिति। पञ्चरूपाणि व्याख्याय सूत्रवाक्यार्थमाह–तेष्विति। इदानींभूतेषु=इदानीमुत्पन्नेषु=इदानींतमेषु स्थूलभूतेष्वित्यर्थः। तन्मात्रादिषु पञ्चरूपत्वाभावाद् इदानींभूतेष्वित्युक्तम्। स्वरूपदर्शनं च संयमस्य जयहेतुत्वे द्वारमुक्तम्। जयो वशीकारः। तत्र पञ्चेति। एकैकमात्रजये हि गौणो भूतजयः, सामग्र्येणाजयादिति भावः। वशीकारमेव कार्यद्वारा लक्षयति–तज्जयादिति। भूतप्रकृतयो भूतकारणानि त्रिगुणतत्स्थपुरुषार्थपर्यन्तानीत्यर्थः, न तु तन्मात्राण्येव केवलानि, गुणपुरुषार्थयोरपि संयमेन साक्षात्कृतत्वादिति॥४४॥**

भाष्यकार भूतों के पाँचवें रूप को बतलाते हैं—'**अथैषामिति**।' गुणों में भोग तथा विवेकख्यातिरूप जो भोगापवर्गार्थता विद्यमान है, वही भूतों का अर्थवत्त्वाख्य पञ्चम रूप है।

**शङ्का**—सत्त्वादि त्रिगुणनिष्ठ '**अर्थवत्त्व**' धर्म भूतों का रूप कैसे बन सकता है?

**समाधान**—इस पर भाष्यकार कहते हैं—'**गुणास्तन्मात्रेति**।' (यद्यपि सत्त्वादि गुण प्रयोजनवान् हैं तथापि अखिल भूतादि कार्य में त्रिगुण की अनुगतता प्रमेयमात्र अर्थात् सम्पूर्ण जड पदार्थों को प्रयोजनवान् बना देती है)।

**शङ्का**—शब्दादि विषयों का साक्षात्काररूप भोग तथा भेदज्ञानरूप विवेकख्याति दोनों अन्तःकरण में ही विद्यमान रहते हैं, न कि गुणों में वे साक्षात् रूप से रहते हैं। अतः गुणों को प्रयोजनवान् क्यों कहा जा रहा है?

**समाधान**—वार्त्तिककार समाधान करते हैं—भोगापवर्ग भी (अन्य कार्यों के समान) प्रलयकाल में अनागतावस्थरूप से अथवा वासनारूप से गुणों में ही विद्यमान रहते हैं और फिर कारण के क्रम से कार्यों में अन्वित होते हैं। अतः '**अर्थवत्त्व**' धर्म की कार्यों में अभिव्यक्ति होती है। (अतः कार्यों में अभिव्यक्त होने वाला अर्थवत्त्व धर्म सूक्ष्म रूप से मूलकारण गुणों में विद्यमान रहता है। अतः गुणों की अर्थवत्ता साक्षात् अभिव्यक्त न होने पर भी उनको अर्थवान् कहना असमीचीन नहीं है। क्योंकि सांख्ययोगशास्त्र में कार्य-कारण में अभेद माना गया है। अतः गुणों की अर्थवत्ता के विषय में पूर्वपक्षी द्वारा उद्भावित शंका निरस्त हो जाती है)। इस प्रकार भूतों के पाँच रूपों का वर्णन करके भाष्यकार सूत्रार्थ करते हैं—'**तेष्विति**।' भाष्य में प्रयुक्त '**इदानींभूत**' पद का अर्थ इदानींतन स्थूलभूत है। पञ्च महाभूत के कारण पञ्च तन्मात्रादियों में स्थूलादि पञ्च रूप का अभाव होने से भाष्यकार ने (स्पष्ट- विप्रतिपत्त्यर्थ) '**इदानींभूत**' पद का प्रयोग किया है। महाभूतविषयक संयमजय कराने में भूतों के स्थूलाख्यादि स्वरूपज्ञान को '**द्वार**' बतलाया गया है। अर्थात् संयमाभ्यासी भूतों के स्थूलादि रूपों के ज्ञान द्वारा भूतजयी बनता है। '**जय**' शब्द का अर्थ वशीकार है। वार्त्तिककार आगे के भाष्य को उठाते हैं—'**तत्र पञ्चेति**।' भूतों के एक-एक रूप का जय होने पर गौण भूतजय होता है, क्योंकि समस्त रूपों सहित भूतजय नहीं होता है। भूतजयरूप कार्य द्वारा भाष्यकार '**वशीकार**' फल को बतलाते हैं—'**तज्जयादिति**।' संयम द्वारा भूतजय से भूतप्रकृतियाँ अर्थात् भूतकारणक पञ्चतन्मात्र से लेकर त्रिगुण और त्रिगुणस्थ पुरुषार्थपर्यन्त सभी पदार्थ योगी के संकल्पानुसारी हो जाते है, केवल पञ्चतन्मात्र ही नहीं, क्योंकि भूतविषयक संयम से गुण और पुरुषार्थ का भी साक्षात्कार होता है॥४४॥

सम्प्रति, भूतजयसम्बन्धी सिद्धियों का प्रतिपादक सूत्र उपस्थित हो रहा है—

### योगसूत्रम्

## ततोऽणिमादिप्रादुर्भावः काय[1]संपत्तद्धर्मानभिघातश्च॥४५॥

तदनन्तर (भूतजय से) अणिमादि सिद्धियों का आविर्भाव, शारीरिक वैभव तथा भूतों के धर्मों का अबाधित्व (बाधारहितत्व) सिद्ध होता है॥४५॥

### व्यासभाष्यम्

**तत्राणिमा भवत्यणुः। लघिमा लघुर्भवति। महिमा महान्[2]भवति। प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम्। प्राकाम्यमिच्छानभिघातः, भूमावुन्मज्जति निमज्जति यथोदके। वशित्वं [3]भूतभौतिकेषु वशीभवत्यवश्यश्चान्येषाम्। ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे। यत्र कामावसायित्वं सत्यसङ्कल्पता, यथा सङ्कल्पस्तथा भूतप्रकृतीनामवस्थानम्। न च शक्तोऽपि पदार्थविपर्यासं करोति। [4]कस्मात्? अन्यस्य यत्र कामावसायिनः पूर्वसिद्धस्य तथा[5]भूतेषु संकल्पादिति। एतान्यष्टावैश्वर्याणि। कायसंपद्वक्ष्यमाणा। तद्धर्मानभिघातश्च, पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादि[6]क्रियाम्, शिलामप्य[7]नुविशतीति, नापः स्निग्धाः क्लेदयन्ति, नाग्निरुष्णो दहति, न वायुः प्रणामी वहति। अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः, [8]सिद्धानामप्यदृश्यो भवति॥४५॥**

इन अष्ट सिद्धियों में प्रथम 'अणिमा' नामक सिद्धि वह है, जिससे योगी अणुपरिमाण वाला हो जाता है। 'लघिमा' नामक सिद्धि वह है, जिससे योगी हलका हो जाता है। 'महिमा' नामक सिद्धि से योगी महत्परिमाण वाला हो जाता है। 'प्राप्ति' नामक सिद्धि वह है, जिससे योगी अंगुली के अग्रभाग से चन्द्रमा का स्पर्श कर लेता है। 'प्राकाम्य' नामक सिद्धि वह है, जिससे योगी की इच्छा-पूर्ति में बाधा नहीं आती है। योगी स्वेच्छानुसार जल की भाँति

---

1. **सम्पन्न०**—इति पाठान्तरम्।
2. छ थ—**गरिमा गरीयान् भवति** (**भवति**—पश्चात्) उपलभ्यते, क ख ग घ च ज झ त द ध न प फ ब भ म य र—**गरिमा...भवति** नोपलभ्यते।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**भूतभौतिकेषु**, ब—**भूतभौतिक०**।
4. क ख ग घ च छ ज थ द ध न प फ ब भ म य र—**कस्मात्**, झ त—**तस्मात्**।
5. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**भूतेषु**, ब—**तेषु**।
6. क ख ग घ च ज द ध प फ ब भ म य र—**क्रियां शिलां**, छ झ त थ—**क्रिया**, **शिलां**, न—**क्रियाशीलाम्**।
7. क ख ग घ च छ ज झ त थ द ध न प ब भ म य र—**अनुविशति**, फ—**अनुप्रविशति**।
8. क ख ग घ च छ ज झ त थ द ध प फ ब भ म य र—**सिद्धानां**, न—**स्निग्धानाम्**।

भूमि में उन्मज्जन और निमज्जन करता है। 'वशित्व' नामक सिद्धि वह है, जिससे योगी भूत-भौतिक पदार्थों में वश्यता प्राप्त कर लेता है। वह स्वयं भूत-भौतिक पदार्थों के वश में नहीं रहता है। 'ईशितृत्व' नामक सिद्धि वह है, जिससे योगी पदार्थों की उत्पत्ति, विनाश और स्थापना में समर्थ होता है। सत्यसंकल्पता को 'यत्रकामावसायित्व' कहते हैं। इससे योगी जैसा संकल्प करता है, वैसे ही भूतों की प्रकृतियाँ हो जाती हैं। किन्तु समर्थ होने पर भी योगी पदार्थों का विपर्यास नहीं करता है। अर्थात् पदार्थगत प्रकृति को विपरीत नहीं करता है। क्योंकि दूसरे सत्यसंकल्पसिद्ध (ईश्वर) का पदार्थों को उस प्रकार रखने का संकल्प होता है। ये आठ ऐश्वर्य हैं। 'कायसम्पत्' सिद्धि का वर्णन स्वयं सूत्रकार आगे करने वाले हैं। भूतों के धर्मों का अनभि- घात 'तद्धर्मानभिघात' नामक सिद्धि है। इसकी प्राप्ति होने पर पृथ्वी अपने काठिन्य धर्म से योगी की शरीरादि क्रिया को रोक नहीं सकती है। योगी शिला के अन्दर भी प्रवेश कर जाता है। स्नेह (तरलता) युक्त जल योगी के शरीर को आर्द्र नहीं करता है। उष्ण अग्नि उसे जला नहीं पाती है। वहन- शील वायु योगी को कम्पायमान नहीं करता है। अनावरणात्मक आकाश में वह आवृत शरीर वाला (अदृश्य) बना रहता है। आकाश में स्थित इस योगी को सिद्ध पुरुष भी नहीं देख पाते हैं॥४५॥

### तत्त्ववैशारदी

**संकल्पानुविधाने भूतानां किं योगिनः सिध्यतीत्यत आह—ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च। स्थूल[1]संयमजयाच्चतस्रः सिद्धयो भवन्तीत्याह—[2]तत्रेति। तत्राणिमा महानपि भवत्यणुः। लघिमा महानपि लघुर्भूत्वेषीकातूल इवाकाशे विहरति। महिमाल्पोऽपि [3]ग्रामनगगगनपरिमाणो भवति। प्राप्तिः सर्वे भावाः सन्निहिता भवन्ति योगिनः, तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूपसंयमविजयात्सिद्धिमाह—प्राकाम्यमिच्छानभिघात इति। नास्य रूपं भूतस्वरूपैर्मूर्त्यादिभिर[4]भिहन्यते। भूमावुन्मज्जति निमज्जति च यथोदके। सूक्ष्मविषयसंयमजयात्सिद्धिमाह—वशित्वमिति। भूतानि पृथिव्यादीनि, भौतिकानि गोघटादीनि, तेषु वशी स्वतन्त्रो भवति। तेषां [5]त्ववश्यस्तत्कारणतन्मात्र-**

---

1. क ख ग घ च छ झ त थ द ध न—संयमजयात्, ज—संयमात्।
2. थ द ध तत्रेति उपलभ्यते, क ख ग घ च छ ज झ त न—तत्रेति नोपलभ्यते।
3. क—नागनगगगन, ख ग—नागनगनगरगगन०, घ च छ ज झ त न—ग्रामनगगगन०, थ द ध—नागनगनगर०।
4. क घ च छ ज झ त थ द ध न—अभिहन्यते, ख ग—हन्यते।
5. क ख ग घ च छ त थ द ध न—त्ववश्यः, ज—च वश्यः, झ—त्ववशाः।

**पृथिव्यादिपरमाणुवशीकारात्तत्कार्यवशीकारः। तेन यानि यथावस्थापयति तानि तथावतिष्ठन्त इत्यर्थः। अन्वयविषयसंयमजयात्सिद्धिमाह–ईशितृत्वमिति। तेषां भूतभौतिकानां विजितमूल-प्रकृतिः सन् यः प्रभव उत्पादो यश्चाप्ययो विनाशो यश्च व्यूहो [1]यथावद[2]वस्थापनं तेषामीष्टे। अर्थवत्त्वसंयमात्सिद्धिमाह–यत्र कामावसायित्वं सत्यसङ्कल्पता। विजितगुणार्थवत्त्वो हि योगी यद्यदर्थतया सङ्कल्पयति तत्तस्मै प्रयोजनाय कल्पते। विषमप्यमृतकार्ये सङ्कल्प्य भोज-यञ्जीवयतीति। स्यादेतत्–यथा शक्तिविपर्यासं करोत्येवं पदार्थविपर्यासमपि कस्मान्न करोति, [3]तथा च चन्द्रमसमादित्यं कुर्यात्कुहूं च सिनीवालीम् इत्यत आह–न च शक्तोऽपीति। न खल्वेते यत्रकामावसायिनस्तत्र [4]भगवतः परमेश्वरस्याज्ञाम[5]तिक्रमितुमुत्सहन्ते। शक्तयस्तु पदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छानुविधानमिति। एतान्यष्टावैश्वर्याणि। तद्धर्मानभिघात इति। अणिमादिप्रादुर्भाव इत्यनेनैव तद्धर्मान-भिघातसिद्धौ पुनरुपादानं कायसिद्धिवदेतत्सूत्रोपबद्धसकलविषयसंयमफलवत्त्वज्ञापनाय। सुगम-मन्यत्॥४५॥**

**शङ्का**–जब भूत योगी के संकल्प का अनुसरण करते हैं अर्थात् जब भूतों में योगी की संकल्पानुसारिता आ जाती है, तब योगी को कौन सी सिद्धि प्राप्त होती है?

**समाधान**–इस पर सूत्र है–'**तत इति**।' भूतों के '**स्थूल**' रूप को संयम द्वारा जीतने से योगी को चार सिद्धियाँ प्राप्त होती हैं, ऐसा भाष्यकार बतलाते हैं–'**तत्रेति**।' '**अणिमा**' सिद्धि यह है–महत् परिमाण वाला होता हुआ भी योगी अणुपरिमाण वाला हो जाता है। '**लघिमा**' सिद्धि यह है–भारी होता हुआ भी योगी लघु होकर धुनी हुई हलकी रूई के समान आकाश में विहार करता है अर्थात् उड़ान भरता है। '**महिमा**' सिद्धि यह है–अल्प (सीमित) परिमाण वाला होता हुआ भी योगी हाथी, पर्वत और नगर (आदि) के परिमाण वाला हो जाता है। '**प्राप्ति**' सिद्धि यह है–सभी पदार्थ योगी के सन्निकृष्ट रहते हैं। जैसे भूमि में खड़ा होकर ही योगी अंगुली के अग्रभाग से चन्द्रमा को छू लेता है। भूतों के द्वितीय रूप '**स्वरूप**' को संयम द्वारा जीतने पर योगी को प्राप्त होने वाली सिद्धि को भाष्यकार बतलाते हैं–'**प्राकाम्य-मिच्छानभिघात इति**।' '**प्राकाम्य**' सिद्धि यह है–योगी का रूप (शरीरसंस्थानविशेष) पृथिव्यादि भूतों के मूर्त्त्यादि '**स्वरूप**' से प्रतिबद्ध नहीं होता है। जैसे साधारण व्यक्ति जल का उद्भेदन करके उसमें से बाहर निकल आता है, वैसे ही योगी पृथ्वी को

---

1. क ख ग घ च छ ज झ त द ध न–**यथावत्**, थ–**यथा**।
2. क घ च छ ज झ त थ द ध न–**अवस्थापनम्**, ख ग–**अवस्थानम्**।
3. क ख ग घ च छ ज झ त न–**तथा च**, थ ध–**तथा**, द–**यथा**।
4. क ख ग घ च छ ज झ त न–**भवतः**, थ द ध–**भगवतः**।
5. क ग घ च छ ज झ त न–**अतिक्रमितुम्**, ख–**अतिपतितुम्**, थ द ध–**उत्क्रमितुम्**।

फोड़कर बाहर प्रकट होता है और जैसे साधारण व्यक्ति जल में गोता लगाता है, वैसे ही योगी गोता लगाने के समान पृथ्वी में प्रवेश करता है। पृथिव्यादि भूतों के तृतीय '**सूक्ष्म**' रूप को संयम द्वारा जीतने से प्राप्त होने वाली सिद्धि को भाष्यकार बतलाते हैं–'**वशित्वमिति**।' '**वशित्व**' सिद्धि यह है–योगी पृथिव्यादि भूतों तथा गो, घटादि भौतिक पदार्थों (के संचालन) में स्वतन्त्र होता है और स्वयं किसी के वश में नहीं रहता है। भूत-भौतिक पदार्थों के कारण तन्मात्र और पार्थिवादि परमाणुओं के अधीन हो जाने से उनके कार्य भूत-भौतिक पदार्थ भी योगी के वशीकृत हो जाते हैं। इससे भूत-भौतिक पदार्थों को जैसे व्यवस्थित किया जाता है, वैसे ही ये व्यवस्थित हो जाते हैं। भूतों के चतुर्थ '**अन्वय**' रूप विषयक संयम के जय से प्राप्त होने वाली सिद्धि को भाष्यकार बतलाते हैं–'**ईशितृत्वमिति**।' '**ईशित्व**' सिद्धि यह है–उन भूत-भौतिक पदार्थों की मूलप्रकृति (तन्मात्राओं) को जीतकर योगी पदार्थों की उत्पत्ति (प्रभव), विनाश (अप्यय) और यथोचित स्थिति (व्यूह) को करने में सक्षम होता है। भूतों के पञ्चम रूप '**अर्थवत्त्व**' विषयक संयम से प्राप्त सिद्धि का प्रतिपादन भाष्यकार करते हैं–'**यत्र कामावसायित्वं सत्यसङ्कल्पतेति**।' '**कामावसायित्व**' सिद्धि यह है–भूतों के '**अर्थवत्त्व**' रूप पर विजयप्राप्त योगी जिस किसी पदार्थ को जिस किसी प्रयोजन के रूप से सोचता है, वह पदार्थ उस प्रयोजन को सिद्ध करता है। जैसे अमृत रूप में संकल्पित कर विष को भी खाता हुआ 'योगी' जीवित रहता है।

**शङ्का**–यदि ऐसी बात है तो जैसे योगी पदार्थनिष्ठ शक्ति को परिवर्तित करता है वैसे ही पदार्थ को भी क्यों नहीं बदलता है? जैसे चन्द्रमा को सूर्य करे तथा कुहू (प्रतिपत् युक्त अमावस्या) को सिनीवाली (चतुर्दशी युक्त अमावस्या) में परिवर्तित करे?

**समाधान**–इस पर भाष्यकार कहते हैं–'**न च शक्तोऽपीति**।' '**कामावसायित्व**' सिद्धिप्राप्त योगिजन पूज्य ईश्वर की आज्ञा का उल्लंघन करने का साहस नहीं करते हैं। किन्तु पदार्थों की बाह्य शक्तियाँ तो जाति, देश, काल और अवस्थाभेद से अनियत स्वभाव वाली होती हैं, इसलिये पदार्थों की शक्तियों का अपनी इच्छा के अनुसार विपर्यास करना औचित्यपूर्ण है। ये आठ प्रकार की सिद्धियाँ भूतजय से प्राप्त होने वाले आठ ऐश्वर्य हैं। सूत्र के अन्तिम अंश के बारे में विचार किया जा रहा है–'**तद्धर्मानभिघात इति**।' अणिमादि सिद्धियों का प्रादुर्भाव होने से ही '**तद्धर्मानभिघात**' रूप सिद्धि भी प्राप्त होती है, फिर भी '**कायसिद्धि**' के समान इस सूत्र में सकलभूत-विषयक संयम का फल बतलाने के लिये '**तद्धर्मानभिघात**' सिद्धि का पृथक् निर्देश किया गया है। शेष भाष्य सुगम है॥४५॥

**बालप्रिया–**

'**उन्मज्जति**'–इस क्रियापद का अर्थ यह है कि योगी जल की भाँति भूमि का उद्भेदन कर भूमि से बाहर निकल आता है।

'**निमज्जति**'–इस क्रियापद का अर्थ यह है कि योगी जल की भाँति कठोर भूमि के अन्दर प्रवेश करता है।

'**कामावसायित्वम्**'–शास्त्रीय परिभाषा के अनुसार कामावसायी शब्द का अर्थ है–सत्यसंकल्प।

'**तत्र भगवतः परमेश्वरस्य**'–पूर्वसिद्ध अर्थात् संयमनिरपेक्ष होकर सत्यसङ्कल्पादि गुणशाली परमेश्वर संकल्प करता है, इसमें श्रुति प्रमाण है–'**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्**।' अतः योगी ईश्वर के संकल्प का उल्लंघन कर पदार्थविपर्यास की इच्छा ही नहीं करता है।

'**कुहूं च सिनीवालीम्**'–चतुर्दशीयुक्त अमावस्या को 'सिनीवाली' तथा प्रतिपद्युक्ता अमावस्या को 'कुहू' कहते हैं। इसमें श्रुति प्रमाण है–'**या पूर्व्वाऽमावस्या सा सिनीवाली, योत्तरा सा कुहूः**' ॥४५॥

**योगवार्त्तिकम्**

**भूतजयस्य फलं प्रतिपादयति–ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च। तत्र त्रिषु मध्येऽणिमाद्यष्टसिद्धीर्व्याचष्टे–अणिमेति। स्वेच्छया यदणुपरिमाणशरीरो भवति तदणिमा, संकल्पमात्रेण तत्क्षणादेवावयवापचयेन सौक्ष्म्यं देहस्य भवति, भूतप्रकृति[1]वशित्वादिति। एवं सर्वत्र। अणिमाद्याश्च शास्त्रे गणिताः–**

**अणिमा महिमा चैव लघिमा प्राप्तिरिन्द्रियैः।**
**प्राकाम्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता॥**
**गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति॥ इति।**

**लघिमानमाह–लघुरिति। गुरुतरशरीरोऽपीषिकातूलवल्लघुर्भवतीत्यर्थः। स्पृशतीति। भूमिष्ठ एवेति शेषः। अवयवोपचयेनाङ्गुलिदैर्घ्यादिति। एताश्चतस्रः स्थूलसंयमसिद्धयः। स्वरूपसंयमस्य सिद्धिमाह–प्राकाम्यमिति। इच्छाऽनभिघात इति। सत्यामिच्छायां नास्य रूपं भूतस्य रूपैर्मूर्त्यादिभिर्विहन्यते, भूतस्वरूपाणां जितत्वादित्यर्थः। तस्योदाहरणम्–भूमाविति। उन्मज्जति जलमिव भूमिमुद्भिद्योत्तिष्ठति, निमज्जति जलवद् भूमौ प्रविशति चेत्येवमादिः प्राकाम्यमित्यर्थः। सूक्ष्मसंयमस्य सिद्धिमाह–वशित्वमिति। भूतभौतिकेष्विति। भूतेषु व्यष्टिषु भौतिकेषु तत्[2]कार्येषु समष्टिमहाभूतेषु ब्रह्माण्डादिषु चेति व्याख्येयम्, जगद्व्यापारवर्ज-**

1. क ख घ च छ–**वशित्वात्**, ग–**विशिष्टत्वात्**।
2. ख ग–**न तु** (**कार्येषु**–पश्चात्) उपलभ्यते, क घ च छ–**न तु** नोपलभ्यते।

मिति वेदान्तसूत्रेण सिद्धेष्वादिसर्गसामर्थ्याभाववचनादिति। वशीभवति [1]स्वेच्छया परिणमने समर्थो भवति, तत्कारणतन्मात्रविजयात्, तथा तेषामवश्योऽपि भवति [2]विरागादित्यर्थः। अन्वयसंयमस्य सिद्धिमाह–[3]ईशितृत्वमिति। तेषामिति। तेषां भूतानां तन्मात्रद्वारकोत्पत्ति-विनाशयोर्व्यूहाख्यसंस्थानविशेषे च समर्थो भवति, भूतानां मूलप्रकृतिविजयादित्यर्थः। अर्थ-वत्त्वसंयमस्य सिद्धिमाह–यत्रेति। यत्र कामावसायित्वमिति तान्त्रिकी परिभाषा, पुराणेष्वप्येवमवगमात्। भूतप्रकृतीनां गुणतन्मात्रादीनाम[4]वस्थानं परिणामविशेषः। विजितार्थ-संबन्धो हि योगी यद्यदर्थतया यद्वस्तु संकल्पयति तत्तद्वस्तु तदर्थकमेव भवति, विषमप्यमृत-स्यार्थं संकल्प्य भोजयन् जीवलोकं सुखीकरोतीति। नन्वेवं योगी जलमपि तेजः कुर्यात्, धर्ममप्यधर्मं कुर्याद् इत्यव्यवस्थैव स्यादित्याशङ्क्याह–न च शक्तोऽपीति। पूर्वपूर्वयोगिव्य-वहारानुसारेणैव योगी व्यवहरति, अन्यथा तुल्यबलविरोधेन व्यवहारासंभवात्। विरोधमेव दर्शयति–अन्यस्येति। पूर्वेषां तथाभूतेषु यथादृष्टेष्वेव संकल्पादिति वाक्यार्थः। तथा च श्रुतिः–धाता यथापूर्वमकल्पयदिति। स्वनियमपालनार्थमन्तर्यामिणा तथैव सिद्धः प्रेर्यत इति द्रष्टव्यम्। उपसंहरति–इत्यष्टावैश्वर्याणीति। अणिमाद्यष्टसिद्धिव्याख्यापूरणायैव प्राकाम्यमत्र भाष्यकारैः कथितं न त्वत्र सूत्रे प्राकाम्यमणिमादिमध्ये विवक्षितं तद्धर्मानभिघात इत्यनेनैव प्राकाम्यग्रहणेन पौनरुक्त्यापत्तेरिति। काय[5]संपदित्यादि सूगमम्॥४५॥

भाष्यकार भूतजय के फल को प्रतिपादित करते हैं–'तत इति' सूत्रोल्लिखित अणिमादिसिद्धि, कायसम्पत् तथा तद्धर्मानभिघात–इन तीनों में से अणिमादि आठ सिद्धियों को भाष्यकार सर्वप्रथम बतलाते हैं–'अणिमेति।' योगी की इच्छा से उसका जो अणुपरिमाण वाला देह हो जाता है, वही 'अणिमा' सिद्धि है। अभिप्राय यह है कि पाञ्चभौतिक शरीर के कारण (पञ्चतन्मात्र) के वश में होने से योगी के संकल्पमात्र से ही तत्क्षण शरीर के अवयवों की क्षीणताप्रयुक्त सूक्ष्मता होती है। अर्थात् अवयवापचय से योगी का शरीर सूक्ष्म हो जाता है। यही स्थिति अन्य लघिमादि सिद्धियों की है। शास्त्रों में अणिमादि सिद्धियाँ इस प्रकार परिगणित हुई हैं–'अणिमा...तदवस्यति' (श्रीमद्भागवत ११/१५/४-५) अर्थात् 'अणिमा, महिमा और लघिमा ये शरीर की सिद्धियाँ हैं, प्राप्तिनामक सिद्धि का सम्बन्ध इन्द्रियों से है, श्रुत अर्थात् पारलौकिक और दृष्ट अर्थात् लौकिक पदार्थों का इच्छानुसार अनुभव करना प्राकाम्य नाम की सिद्धि है। माया और उसके कार्यों को इच्छानुसार

---

1. क घ च छ–स्वेच्छया परिणमने, ख–शक्तिप्रतिबन्धे, ग–स्वेच्छया परिणामेन।
2. क ख ग–रागादिना, घ–रागात्, च छ–विरागात्।
3. क ख ग घ च–ईशित्वं, छ–ईशितृत्वम्।
4. क ख घ च छ–अवस्थानं, ग–अवस्थानाम्।
5. क ख ग–संपत्०, घ च छ–संयमात्।

प्रेरित कर सकना ईशिता सिद्धि है। विषयों में आसक्त न होना वशिता सिद्धि है तथा जो इच्छित पदार्थों की चरम सीमा को प्राप्त कर लेता है, उसे प्राकाम्य सिद्धि कहते हैं।' भाष्यकार 'लघिमा' सिद्धि को बतलाते हैं—'**लघुरिति**।' अत्यन्त भारी शरीर भी धुनी हुई रूई की भाँति लघु (हलका) हो जाता है। वार्त्तिककार आगे के भाष्य को उठाते हैं—'**स्पृशतीति**।' '**भूमिष्ठ एव**' यह वाक्यशेष है। अवयवोपचय से अङ्गुली के लम्बायमान (दीर्घ) हो जाने से योगी भूमिष्ठ रहकर चन्द्रमा को छू लेता है। प्रथम चार सिद्धियाँ भूतों के '**स्थूल**' रूप के संयम से सिद्ध होती हैं। भाष्यकार भूत के '**स्वरूपाख्य**' रूपविषयक संयमं की सिद्धि को बतलाते हैं—'**प्राकाम्यमिति**।' वार्त्तिककार आगे के भाष्य को उठाते हैं—'**इच्छाऽनभिघात इति**।' स्वेच्छानुसार योगी के शरीर का रूप पृथिव्यादि भूत के मूर्त्त्यादि (काठिन्यादि) रूपों से प्रतिबद्ध नहीं होता है, क्योंकि योगी भूतों के 'स्वरूपाख्यरूप' को जीत लेता है। इस का उदाहरण है— '**भूमाविति**।' **उन्मज्जति**' क्रियापद का अर्थ है—जल के उन्मज्जन की भाँति भूमि को फोड़कर ऊपर आ जाना। '**निमज्जति**' पद का अर्थ है—जल के निमज्जन की भाँति भूमि में प्रवेश करना। यही '**प्राकाम्य**' सिद्धि है। भूतों के '**सूक्ष्माख्य**' रूपविषयक संयम का फल भाष्यकार बतलाते हैं—'**वशित्वमिति**।' आगे का भाष्य है—'**भूतभौतिकेष्विति**।' 'भूत' अर्थात् व्यष्टिरूप भूतों में, '**भौतिक**' अर्थात् भूत के कार्य समष्टिरूप महाभूतों में तथा ब्रह्माण्डादियों में भूतजयी की वशवर्त्तिता होती है, ऐसी व्याख्या करनी चाहिये, क्योंकि '**जगद्व्यापारवर्जम्**' (ब्र.सू. ४/४/१७) इस वेदान्त सूत्र के द्वारा सिद्धादि पुरुषों में सर्ग या सामर्थ्याभाव कहा गया है। सूत्र का अर्थ है—'जगत् की रचना, स्थिति और संहार आदि के व्यापार को छोड़कर।' (पूरा सूत्र है—'**जगद्-व्यापारवर्जं प्रकरणाद- सन्निहितत्वाच्च**।' सूत्र का भाव यह है कि मुक्त जीव अर्थात् सिद्ध पुरुष के परब्रह्म के समान व्यापक न होने से उसमें जगत् की रचना आदि कार्यों को करने का सामर्थ्य नहीं है। जीवात्मा केवल ब्रह्मलोक के दिव्य भोगों को उपभोग करने में समर्थ हैं, किन्तु ब्रह्म के कार्य-रचना आदि का उसमें सामर्थ्य नहीं है)। '**वशीभवति**' क्रियापद का अर्थ है— भूतजयी का भूतों के परिणमन में स्वेच्छापूर्वक शक्त होना। योगी को भूतों का यह परिणमन-सामर्थ्य इसलिये प्राप्त होता है, जिससे योगी भूतों के कारण तन्मात्र को जीत सके। योगी उन भूतों के अधीन नहीं रहता है, क्योंकि भूतों के प्रति उसमें वैराग्य जागरित हो जाता है। भूतों के चतुर्थ '**अन्वयाख्य**' रूपविषयक संयम की सिद्धि को भाष्यकार बतलाते हैं— '**ईशितृत्वमिति**।' '**तेषामिति**।' '**ईशितृत्व**' नामक सिद्धि वह कहलाती है, जिसकी प्राप्ति होने पर योगी तन्मात्राओं के द्वारा पञ्च महाभूतों की उत्पत्ति और संहृति करने में तथा व्यूहाख्य संस्थानविशेष का निर्माण करने में समर्थ हो जाता है, क्योंकि वह

भूतों की मूलप्रकृति अर्थात् तन्मात्र पर विजय प्राप्त कर लेता है। सम्प्रति, भाष्यकार भूतों के '**अर्थवत्त्वाख्य**' रूपविषयक संयम की सिद्धि का प्रतिपादन करते हैं–'**यत्रेति**।' सत्य- संकल्पता का '**यत्रकामावसायित्व**' यह तान्त्रिक अर्थात् शास्त्रीय नाम है, क्योंकि पुराणों में भी ऐसा ही कहा गया है। योगी जैसा संकल्प करता है वैसा ही भूत के प्रकृतिभूत गुणात्मक तन्मात्रादियों का '**अवस्थान**' अर्थात् परिणामविशेष होता है। जिसने प्रयोजनरूप सम्बन्ध को जीत लिया है ऐसा योगी जिस-जिस प्रयोजन के रूप से जिस-जिस पदार्थ का संकल्प करता है, तत्तद् वस्तुएँ उस-उस प्रयोजन को ही सिद्ध करती हैं। जैसे विष को भी अमृत के प्रयोजन रूप से सोचकर खिलाता हुआ योगी मनुष्य को सुखी करता है।

**शङ्का**–उक्त प्रकार से विपर्यास की शक्ति प्राप्त होने पर यदि योगी जल को भी तेज के रूप में परिवर्तित करेगा तथा धर्म को भी अधर्म का रूप प्रदान करेगा तो अव्यवस्था ही उत्पन्न होगी?

**समाधान**–उक्त आशंका करके भाष्यकार उत्तर देते हैं–'**न च शक्तोऽपीति**।' (पदार्थ का विपर्यास करने में समर्थ होता हुआ भी) यत्रकामावसायित्वजयी पूर्व-पूर्व योगी के (शक्ति) व्यवहार के अनुसार ही (पदार्थों के विपर्यास का) व्यवहार करता है, अन्यथा दो तुल्य शक्ति वालों का विरोध होने से ये अपनी-अपनी शक्ति का प्रयोग ही नहीं कर सकेंगे। (दो तुल्य योगियों की अपनी-अपनी इच्छा के अनुसार पदार्थ का विपर्यास करने पर जो विरोध की स्थिति उत्पन्न होगी उस) विरोध का ही भाष्यकार वर्णन करते हैं–'**अन्यस्येति**।' नवीन योगी द्वारा भूत-भौतिक-व्यवस्था में परिवर्तन करने पर पूर्वसिद्ध योगी के सत्यसंकल्पत्व का खण्डन होगा, क्योंकि पूर्ववर्ती योगियों का यथादृष्ट भूतों के विषय में यथेष्ट संकल्प बना रहता है–इस प्रकार वाक्यार्थ हुआ। इसमें श्रुतिवाक्य प्रमाण है–'**धाता यथापूर्वमकल्पयत्**' (ऋग्वेद १०/१९०/३) अर्थात् 'विधाता ने पहली सृष्टि के समान अगली सृष्टि में संकल्प किया।' अतः ऐसा समझना चाहिये कि अन्तर्यामी के द्वारा ही अपने नियम का पालन करने के लिये योगी उसी रूप में प्रेरित किया जाता है। भाष्यकार अष्टैश्वर्य को उपसंहृत करते हैं--'**इत्यष्टावैश्वर्याणीति**।' अणिमादि अष्ट सिद्धियों की संख्यापूर्ति के लिये ही भाष्यकार ने प्रकृत सूत्र के भाष्य में अणिमादि सिद्धियों के मध्य '**प्राकाम्य**' सिद्धि का अभिधान किया है। वस्तुतस्तु सूत्रकार को प्रकृत सूत्र में '**प्राकाम्य**' संज्ञक सिद्धि को अणिमादि सिद्धियों के मध्य परिगणित करना अभिप्रेत नहीं रहा है, क्योंकि '**तद्धर्मानभिघातः**' इस सूत्रांश द्वारा ही '**प्राकाम्याख्य**' सिद्धि का ग्रहण हो जाने से उसे पुनः अष्टसिद्धि में परिगणित करना पुनरुक्तिदोषयुक्त रहेगा। सूत्र के उत्तरांश '**कायसंपत्**' आदि का वैयासिक व्याख्यान सुगम है॥४५॥

पूर्व सूत्र में प्रयुक्त '**कायसम्पत्**' पद के व्याख्यानरूप में अगला सूत्र है–

### योगसूत्रम्

## [1]रूपलावण्यबलवज्र[2]संहननत्वानि [3]काय[4]संपत्॥४६॥

रूपलावण्य, बल और वज्र के समान सुदृढ़ अवयवविन्यास 'कायसम्पत्' है॥४६॥

### व्यासभाष्यम्

**दर्शनीयः कान्तिमानतिशयबलो वज्रसंहननश्चेति॥४६॥**

योगी दर्शनीय चमक वाला, अतिशय बलशाली तथा वज्र के समान सुदृढ़ अंगविन्यास वाला हो जाता है॥४६॥

### तत्त्ववैशारदी

**कायसंपदमाह–रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्। वज्रस्येव संहननमवयवव्यूहो दृढो निबिडो यस्य स [5]तथोक्तः॥४६॥**

सम्प्रति, सूत्रकार (भूतजयी को प्राप्त होने वाली) '**कायसिद्धि**' के प्रतिपादक सूत्र को रचते हैं–'**रूपेति**।' तत्त्ववैशारदीकार वज्रसंहनन का विग्रह करते हैं–'**वज्रस्य इव संहननम्, अवयवव्यूहो दृढो निबिडो यस्य सः**' अर्थात् वज्र के समान जिसकी अवयव-संरचना दृढ होती है उसे 'वज्रसंहनन' कहते हैं। **वज्रसंहनन** के भाव अर्थात् स्वभाव को '**वज्रसंहननत्व**' कहते हैं॥४६॥

### योगवार्त्तिकम्

**प्रसिद्धत्वात्सिद्धिद्वयविवेचनानपेक्षया केवलां कायसंपदं सूत्रकारो विवृणोति–रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्। वज्रस्येव संहननं प्रहारो यस्येति वज्रवन्निविडो दृढः संघातो यस्येति वा वज्रसंहननः। भाष्यं सुगमम्॥४६॥**

प्रसिद्ध होने के कारण सिद्धिद्वय (अणिमादि अष्टैश्वर्य तथा तद्धर्मानभिघात) के प्रतिपादन (सूत्रांकन) की अपेक्षा न रहने से सूत्रकार केवल '**कायसंपत्**' को सूत्रांकित (उद्घाटित) करते हैं–'**रूपेति**।' वार्त्तिककार '**वज्रसंहनन**' पद का दो प्रकार से बहुब्रीहिसमासपरक विग्रह करते हैं–'**वज्रस्येव संहननं प्रहारो यस्येति, वज्रवन्निविडो दृढ**

---

1. **स्वरूप०, रूपता**–इति पाठान्तरे।
2. **संहननानि, संहननत्वं**–इति पाठान्तरे।
3. **च**–(**काय०**–प्राक्) उपलभ्यते।
4. **संपदः**–इति पाठान्तरम्।
5. क ख ग घ च छ ज झ त न–**तथोक्तः**, थ द ध–**तथा तस्य भावः तत्त्वमिति**।

**संघातो यस्येति वा वज्रसंहननः**' अर्थात् वज्र के समान है प्रहार जिसका अथवा वज्रवत् घनीभूत (निविड) दृढसंघात (शरीरगठन) है जिसका उसे '**वज्रसंहनन**' कहते हैं। (भूतजयी का यह '**वज्रसंहनन**' शारीरिक वैभव है)। भाष्य सुगम है॥४६॥

सम्प्रति संयमसाध्य अगली सिद्धि का प्रतिपादक सूत्र उपस्थित हो रहा है–

### योगसूत्रम्

## ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः॥४७॥

(इन्द्रियों के) ग्रहण, स्वरूप, अस्मिता, अन्वय और अर्थवत्त्व–रूप में संयम करने से योगी को 'इन्द्रियजय' प्राप्त होता है॥४७॥

### व्यासभाष्यम्

**सामान्यविशेषात्मा शब्दादि[1]ग्राह्यः, तेष्विन्द्रियाणां वृत्तिर्ग्रहणम्। न च तत्सामान्य[2]मात्रग्रहणाकारम्, कथमनालोचितः [3]स विषयविशेष इन्द्रियेण मनसा [4]वानुव्यवसीयेतेति। स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदा[5]नुगतः समूहो [6]द्रव्यमिन्द्रियम्। तेषां तृतीयं रूपमस्मितालक्षणोऽहंकारः। तस्य सामान्यस्येन्द्रियाणि विशेषाः। चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणा येषामिन्द्रियाणि साहंकाराणि परिणामः। पञ्चमं रूपं गुणेषु [7]यदनुगतं [8]पुरुषार्थवत्त्वमिति। पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं संयमः, तत्र तत्र जयं कृत्वा पञ्चमरूपजयाद् इन्द्रियजयः प्रादुर्भवति योगिनः॥४७॥**

सामान्य और विशेषरूप शब्दादि 'ग्राह्य' कहलाते हैं। इन शब्दादि विषयों में इन्द्रियों का जो व्यापार (वृत्ति) है, उसे 'ग्रहण' कहते हैं। वह ग्रहणरूप इन्द्रियों की वृत्ति केवल (पदार्थगत) सामान्यमात्र को ही अपना विषय नहीं

---

1. क ग ब–**विषयः**, ख घ च छ ज झ त थ द ध न प फ भ म य र–**ग्राह्यः**।
2. क ग घ च छ ज झ त थ द ध न प फ भ म य र–**मात्र०**, ख ब–**मात्रे**।
3. क ख ग घ व छ ज झ त थ द ध न प फ भ म य र–**सः**, ब–**स्व०**।
4. क ख च छ ज थ द ध न भ म–**वा**, झ त–**न**, ख घ प फ ब य र–**वा/न** नोपलभ्यते।
5. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**अनुगतः समूहो द्रव्यं**, ब–**अनुगतं द्रव्यम्**।
6. छ थ–**परमाणुस्तस्मिन्स्वकार्यव्यवसायात्मकं** (**द्रव्यं**–पश्चात्) उपलभ्यते, क ख ग घ च ज झ त द ध न प फ ब भ म य र–**परमाणु...यात्मकं** नोपलभ्यते।
7. क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र–**यत्**, द–**तत्**।
8. क ख ग घ च छ ज झ त थ द ध न प फ ब म र–**पुरुषार्थवत्त्वं**, भ य–**पुरुषार्थतत्त्वम्**।

बनाती है, क्योंकि इन्द्रिय के द्वारा अगृहीत वह ग्राह्यगत-विषयविशेष मन के द्वारा कैसे जाना जा सकता है? अर्थात् नहीं जाना जा सकता है। 'स्वरूप' यह है–प्रकाशशील बुद्धिसत्त्व के सामान्य और विशेषों के अपृथक्सिद्ध (अयुत-सिद्ध) अवयवों में अनुगत रहने वाला समूह 'इन्द्रिय' नामक द्रव्य है। इन्द्रियों का तीसरा रूप 'अस्मिता' लक्षण वाला अहंकार है। उस अस्मितारूप सामान्य की इन्द्रियाँ विशेष हैं। इन्द्रियों का चौथा रूप प्रकाश-क्रिया-स्थितिशील व्यवसायात्मक 'गुण' है, जिनका अहंकारसहित इन्द्रियाँ परिणाम (कार्य) हैं। पांचवाँ रूप है–गुणों में अनुगत रहने वाला 'पुरुषार्थसाधकत्व'। इन्द्रियों के इन पाँच रूपों में क्रमानुसार संयम और तत्तद् रूप पर विजय प्राप्त करके पाँचों रूपों में जय हो जाने से योगी को 'इन्द्रियजय' नाम की सिद्धि आविर्भूत होती है॥४७॥

### तत्त्ववैशारदी

**जितभूतस्य योगिन इन्द्रियजयोपायमाह–ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादि-न्द्रियजयः। ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च, तेषु संयमस्तस्मादित्यर्थः। गृहीतिर्ग्रहणम्, तच्च ग्राह्याधीननिरूपणमिति। ग्राह्यं दर्शयति–सामान्यविशेषात्मेति। ग्राह्य-मुक्त्वा ग्रहणमाह–तेष्विति। वृत्तिरालोचनं विषयाकारा परिणतिरिति यावत्। ये त्वाहुः–सामान्यमात्रगोचरेन्द्रियवृत्तिरिति तान्प्रत्याह–न चेति। गृह्यत इति ग्रहणम्। [1]न सामान्य-मात्रगोचरं ग्रहणम्। बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्तते, अन्यथान्धबधिराद्यभावप्रसङ्गात्। तदिह यदि न विशेषविषयमिन्द्रियं तेनासावनालोचितो विशेष इति कथं मनसानुव्यवसीयेत? तस्मात्सामान्यविशेषविषयमिन्द्रियालोचनमिति। तदेतद्ग्रहणमिन्द्रियाणां प्रथमं रूपम्। द्वितीयं रूपमाह–स्वरूपं पुनरिति। अहङ्कारो हि सत्त्वभागेनात्मीयेनेन्द्रियाण्यजीजनत्। अतो यत्तत्र करणत्वं सामान्यं यच्च नियतरूपादिविषयत्वं विशेषस्तदुभयमपि प्रकाशात्मकमित्यर्थः। तेषां तृतीयं रूपमिति। अहङ्कारो हीन्द्रियाणां कारणमिति यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारण्यात्सामान्यमिन्द्रियाणामित्यर्थः। चतुर्थं रूपमिति। गुणानां हि द्वैरूप्यं [2]व्यव-सेयात्मकत्वं व्यवसायात्मकत्वं च। तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्च तन्मात्राणि भूतभौतिकानि [3]च [4]निर्मिमते, व्यवसायात्मकत्वं तु ग्रहणरूपमास्थाय साहङ्काराणीन्द्रियाणी-त्यर्थः। शेषं सुगमम्॥४७॥**

---

1. ख ग घ च छ ज त न–न उपलभ्यते, क झ थ द ध–न नोपलभ्यते।
2. क ख ग थ द ध–व्यवसायात्मकत्वं व्यवसेयात्मकत्वम्, घ च छ झ न–व्यवसेयात्मकत्वं व्यवसायात्मकत्वम्, ज–व्यवसेयात्मकं व्यवसेयात्मकत्वम्, त–व्यवसेयात्मकत्वं व्यवसायात्मकम्।
3. थ द ध–च उपलभ्यते, क ख ग घ च छ ज झ त न–च नोपलभ्यते।
4. क ख त थ द ध–निर्मिमते, ग घ च छ ज झ न–निर्मिमीते।

सम्प्रति, भूतजयी योगी के **'इन्द्रियजय'** के उपाय को सूत्रकार बतलाते हैं– **'ग्रहणेति।'** इतरेतरद्वन्द्वसमास करते हुए तत्त्ववैशारदीकार कहते हैं–**ग्रहणं च स्वरूपं चास्मिता चान्वयः अर्थवत्त्वं च** (इति **ग्रहणस्वरूपास्मितान्वयार्थवत्त्वानि** ) **तेषु** अर्थात् ग्रहण, स्वरूप, अस्मिता, अन्वय और अर्थवत्त्व में संयम करने से योगी को **'इन्द्रिय- जय'** प्राप्त होता है। जिससे विषय गृहीत होता है, उसे **'ग्रहण'** कहते हैं। और यह **'ग्रहण'** का निरूपण ग्राह्य-निरूपण के अधीन होता है, इसलिये भाष्यकार **'ग्राह्य'** का स्वरूप बतलाते हैं–**'सामान्यविशेषात्मेति।'** धर्मधर्मिरूप सामान्य-विशेष को **'ग्राह्य'** कहा जाता है। **'ग्राह्य'** को बतलाकर भाष्यकार **'ग्रहण'** का लक्षण करते हैं–**'तेष्विति।'** **'वृत्ति'** शब्द का अर्थ है–आलोचन अर्थात् विषयाकार परिणाम। इस प्रकार विषयों में इन्द्रियों की जो आलोचनरूप वृत्ति अर्थात् विषयाकार परिणति होती है, उसे **'ग्रहण'** कहते हैं। जो बौद्ध लोग यह मानते हैं–'इन्द्रियवृत्ति सामान्यमात्रविषयक होती है' अर्थात् शब्दत्वादि तथा घटत्वादि सामान्यधर्म ही इन्द्रियवृत्ति के विषय होते हैं और धर्मीभूत शब्दादि तथा घटादि विशेष इन्द्रियजन्य वृत्ति के विषय नहीं होते हैं, अपितु ये मनोमात्र ग्राह्य होते हैं, उनके प्रति भाष्यकार बतलाते हैं अर्थात् उनके मत का खण्डन करते हैं–**'न चेति।'** इन्द्रिय केवल सामान्यविषयक ही नहीं, अपितु सामान्य-विशेष उभयविषयक होती है। **'गृह्यत इति ग्रहणम्'** अर्थात् जिसके द्वारा ग्रहण किया जाता है, उसे **'ग्रहण'** (इन्द्रिय) कहते हैं। ग्रहण (इन्द्रिय) सामान्यमात्रविषयक नहीं होता है। बाह्येन्द्रिय के अधीन रहकर ही मन बाह्य विषय की ओर प्रवृत्त होता है, अर्थात् स्वतन्त्र नहीं, अन्यथा (बाह्येन्द्रियनिरपेक्ष मन की प्रवृत्ति मानने पर) अन्ध, बधिरादि के अभाव का (अनभिप्रेत, अव्यावहारिक) प्रसंग उपस्थित होगा। अर्थात् चक्षु-श्रोत्रादि बाह्येन्द्रिय के विना ही जब मनोमात्र से रूप, शब्दादि सर्वविषयक विशेष (व्यक्ति) का ज्ञान ही हो जायेगा तो व्यक्ति अन्ध, बधिर आदि नहीं कहा जा सकेगा)। इस स्थिति में यदि इन्द्रिय को घटादि विशेषविषयक नहीं माना जायेगा तो इन्द्रिय के अविषयभूत घटादिविशेष का मन से अनुव्यवसाय अर्थात् जिसको पौरुषेयबोध कहते हैं, वह कैसे होगा? अर्थात् पौरुषेयबोध नहीं हो सकेगा। अतः इन्द्रिय सामान्यविशेष उभयविषयक है, यह सिद्ध होता है। इस प्रकार इन्द्रियों का प्रथम रूप **'ग्रहण'** कहलाता है।

भाष्यकार इन्द्रियों के द्वितीय रूप की व्याख्या करते हैं–**'स्वरूपं पुनरिति।'** (प्रकाशरूप महत्तत्त्व का परिणाम जो अयुतसिद्ध अवयवरूप सात्त्विक अहंकार है, उसमें कार्यरूप से अनुगत जो सामान्य-विशेष का (कारणत्व और नियत रूपादि विषयत्व का) समूहरूप द्रव्यविशेष है, वह इन्द्रिय कहा जाता है। यही इन्द्रियों का **'स्वरूप'** संज्ञक द्वितीय धर्म है)। भाव यह है–(सत्त्वबहुल बुद्धि से जायमान)

अहंकार तत्त्व ने अपने सत्त्वांश से (सत्त्वांशप्रचुर से) इन्द्रियों की उत्पत्ति की है। अतः जहाँ करणत्वसामान्य तथा नियतरूपादिविषयत्वरूप विशेष है, वहाँ इन्द्रिय के उभयरूप (सामान्य तथा विशेष) भी प्रकाशात्मक होते हैं। (भाव यह है कि यदात्मक कारण होता है, तदात्मक कार्य होता है। अतः प्रकाशरूप बुद्धि के कार्य प्रकाशप्रचुर अहंकार की कार्यरूपा इन्द्रियाँ भी प्रकाशबहुला हैं। यही इन्द्रियों का '**स्वरूप**' नामक द्वितीय रूप है।

भाष्यकार इन्द्रियों के तृतीय रूप का प्रतिपादन करते हैं–'**तेषां तृतीयं रूपमिति**।' अहंकार इन्द्रियों का कारण है। इसलिये 'जहाँ इन्द्रियाँ हैं, वहाँ उनका कारण अहंकार अवश्य रहता है'–(इस व्याप्ति के अनुसार) सर्वेन्द्रियसाधारण (इन्द्रियानुगत) होने से अहंकार इन्द्रियों का सामान्य रूप है। यही अहंकार रूप '**अस्मिता**' इन्द्रियों का तृतीय रूप है।

इन्द्रियों के चतुर्थरूप का व्युत्पादन किया जा रहा है–'**चतुर्थं रूपमिति**।' गुण व्यवसायात्मक (ज्ञान) और व्यवसेयात्मक (ज्ञेय) रूप से दो प्रकार के हैं। इनमें से व्यवसेयात्मक ग्राह्यता को लेकर गुणों से पञ्चतन्मात्र, पृथिव्यादि पञ्चमहाभूत और घटादि भौतिक पदार्थ उत्पन्न होते हैं और व्यवसायात्मक ग्रहणरूपता को लेकर गुणों से अहंकारसहित इन्द्रियाँ उत्पन्न होती हैं। (अर्थात् व्यवसाय है अपर पर्याय जिसका ऐसे महत्तत्त्वाकार से परिणत जो प्रकाश, क्रिया और स्थिति-शील सत्त्वादि गुण हैं, जिनकी अहंकारसहित इन्द्रियाँ परिणाम हैं, वे सत्त्व-रजस्-तमस्-रूप तीनों गुण इन्द्रियों का '**अन्वय**' नामक चतुर्थ रूप कहा जाता है। शेष भाष्य सुगम है॥४७॥

**बालप्रिया**–

'**सामान्यमात्रग्रहणाकारम्**'–इसका विग्रह इस प्रकार है–**सामान्यमात्रेण ग्रहणमेवाऽऽकारः स्वभावो यस्य तत् सामान्यमात्रग्रहणाकारमिन्द्रियम्।**

'**ये त्वाहुः**'–इससे बौद्धों का मत उपन्यस्त किया गया है। बौद्धों का मत है कि विशेष मनोमात्रग्राह्य होता है, न कि इन्द्रियग्राह्य।

'**अन्धबधिराद्यभावप्रसंगात्**'–तात्पर्य यह है कि चक्षुरादि करण की अपेक्षा किये विना ही मन की बाह्यविषयक वृत्ति को स्वीकार किया जाय तो मन की सत्ता रहने से अन्धादि भी रूपादि का '**आलोचन**' रूप ज्ञान कर सकेंगे।

'**तदुभयमपि प्रकाशात्मकम्**'–भाव यह है कि प्रकाशात्मक बुद्धिसत्त्व के कार्यभूत अयुतसिद्ध अवयव वाले सात्त्विक '**अहंकार**' में अनुगत सामान्यविशेष की समूहरूप इन्द्रियाँ द्रव्य हैं, उभयरूप में ये इन्द्रियाँ प्रकाशात्मक हैं। इनमें से श्रोत्रत्वादि इन्द्रियों का '**सामान्य**' रूप है तथा शब्दादि परिणामभेद '**विशेष**' रूप है॥४७॥

**योगवार्त्तिकम्**

**[1]ग्राह्यसंयमस्य सिद्धय उक्ताः। ग्रहणसंयमस्य सिद्धीराह—ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः। ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च, तेषु संयमात्साक्षात्कारपर्यन्तात् तद्रूपाणामिन्द्रियाणां जयो भवतीत्यर्थः। ग्रहणं व्याचष्टे—सामान्येति। वृत्तिरालोचनं विषयाकारपरिणामविशेषः, चिन्ताऽवधारणाभिमानसंशयरूपादन्तःकरणानामसाधारणवृत्तिचतुष्काद्विलक्षणो दर्शन[2]स्पर्शननामा। यद्यपि सोऽपि स्मरणानुरोधेनान्तःकरणस्यैव तथाऽपि चक्षुराद्युपष्टम्भेनैव भवतीति कृत्वा दर्शनादिश्चक्षुरादीनामुच्यते। तथा चोक्तं साङ्ख्ये—**

**सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।**
**तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि॥ इति।**

ग्राह्यविषयक संयम की सिद्धियाँ बताई गईं। अब ग्रहणविषयक संयम की सिद्धि को सूत्रकार बताते हैं—'**ग्रहणेति**।' इन्द्रियों के ग्रहण, स्वरूप, अस्मिता, अन्वय तथा अर्थवत्त्व रूपों में साक्षात्कार होने तक संयम करने से तद्रूपात्मक इन्द्रियों को जीत लिया जाता है। भाष्यकार इन्द्रियों के प्रथम ग्रहणाख्य रूप की व्याख्या करते हैं—'**सामान्येति**।' '**वृत्ति**' शब्द का अर्थ आलोचन है, जो इन्द्रियों के विषयाकार परिणामविशेष हैं। अन्तःकरण की चिन्ता, अवधारण, अभिमान तथा संशय रूप चार प्रकार की असाधारणवृत्तियों से इन्द्रियों की दर्शन, स्पर्शन आदि नाम वाली वृत्तियाँ विलक्षण (भिन्न, पृथक्) हैं। यद्यपि इन्द्रियों की दर्शनादि नाम वाली '**आलोचन**' वृत्तियाँ भी स्मरणानुरोध से अन्तःकरण की ही हैं, तथापि चक्षुरादि की इन दर्शन, स्पर्शन आदि नाम वाली वृत्तियों का प्रेरक होने से ही उन्हें (दर्शनादि को) चक्षुरादि इन्द्रियों की वृत्तियाँ कहा गया है। जैसा कि सांख्यकारिका में कहा गया है—'**सान्तःकरणा...शेषाणि**' (३५) अर्थात् 'चूँकि अन्य दोनों अन्तःकरणों (मन एवं अहंकार) के साथ बुद्धि समस्त विषयों का अवगाहन (ज्ञान) करती है, इसलिये ये तीनों अन्तःकरण प्रधान (द्वारि) हैं, तथा अन्य (दस) करण अप्रधान (द्वार अर्थात् ज्ञान के गौण साधन) हैं।'

इन्द्रियों की '**आलोचन**' वृत्ति के अभिप्राय को स्पष्ट करते हुए वार्त्तिककार आगे कहते हैं—

**योगवार्त्तिकम्**

**न त्वालोचनशब्दार्थो निर्विकल्पकं ज्ञानं चक्षुरादिमात्रवृत्त्येवेति कल्पनीयम्, एवं सति**

---

1. क ख ग घ च—**ग्राह्यसंयमस्य सिद्धय उक्ताः। ग्रहणसंयमस्य सिद्धीराह** उपलभ्यते, छ—**ग्राह्य...राह** नोपलभ्यते।
2. क ख ग—**आदि०** (**स्पर्शन०**—पश्चात्) उपलभ्यते, घ च छ—**आदि०** नोपलभ्यते।

**चक्षुरादिनैव वैशिष्ट्यस्यापि ग्रहणसम्भवात्, सर्ववृत्तीनां चित्तनिष्ठत्वस्य भाष्ये प्रोक्तत्वाच्च। ये तु बौद्धा विशेषस्य मनोमात्रस्य गोचरत्वमभ्युपगम्येन्द्रियवृत्तिं सामान्यमात्रविषयिणी-माहुस्तान् प्रत्याचष्टे—न चेति। न च तद् इन्द्रियं सामान्यमात्रेण ग्रहणमाकारो रूपं यस्य तथा भवतीत्यर्थः। तत्र हेतुः—कथमित्यादि। [1]स्वरूपमिति। [2]स विषयगतो विशेष इन्द्रियेणानालोचितः कथं मनसाऽनुव्यवसीयेत गृह्येत, मनसो बहिरस्वातन्त्र्यात्। अन्यथा चक्षुराद्य-गोचरार्थानां मनसा विशेषग्रहणप्रसङ्गादित्यर्थः।**

**'आलोचन'** शब्द का अर्थ निर्विकल्पक ज्ञान नहीं है, अपितु इसे चक्षुरादि इन्द्रियों के वृत्तिरूप से ही समझना चाहिये। अर्थात् तत्तद् इन्द्रियों के व्यापार-सामान्य का ही समवेत नाम है—**'आलोचन'**। **'आलोचन'** शब्द का उक्त अर्थ करने पर ही चक्षुरादि के द्वारा दर्शनादि वृत्तियों का वैशिष्ट्य भी गृहीत हो सकेगा तथा भाष्य में सभी वृत्तियों की कथित चित्तनिष्ठता भी उपपन्न हो सकेगी। और जो बौद्ध लोग (वैभाषिक) पदार्थगत विशेष को मन का ही विषय मानकर इन्द्रियवृत्ति को सामान्यमात्रविषयिणी मानते हैं, उन बौद्धों के प्रति भाष्यकार कहते हैं—**'न चेति।'** इन्द्रियों की ग्रहणरूप वृत्ति केबल सामान्यविषयक नहीं है अर्थात् केवल धर्ममात्र को ही विषय करने वाली नहीं है, अपितु धर्मिरूप जो विशेष है तद्विषयक भी है। इसमें हेतु यह है—**'कथमित्यादि।'** आगे का भाष्य है—**'स्वरूपमिति।'** यदि चक्षुरादि इन्द्रियों को पदार्थगत विशेषविषयक न माना जाय तो इन्द्रिय के द्वारा अनालोचित अर्थात् इन्द्रिय के अविषयीभूत विषयगत विशेष का मन के द्वारा कैसे निश्चय किया जा सकेगा? क्योंकि मन बाहरी व्यापार में स्वतन्त्र नहीं है। अन्यथा चक्षुरादि इन्द्रियों के अविषयीभूत (अगोचरीभूत) पदार्थगत विशेष को भी मन के द्वारा गृहीत मानने का प्रसङ्ग आयेगा।

**बालप्रिया—**

**'न च तद् इन्द्रियं सामान्यमात्रेण ग्रहणम्'**—भाव यह है कि इन्द्रिय केवल सामान्य-विषयक ही नहीं, अपितु सामान्य-विशेष उभयविषयक है। क्योंकि बाह्य इन्द्रिय के अधीन ही मन बाह्य विषयों में प्रवृत्त होता है, स्वतन्त्र नहीं। अन्यथा अन्ध-बधिरादि के अभाव का प्रसङ्ग आयेगा। क्योंकि चक्षु, श्रोत्रादि बाह्य इन्द्रियों के विना ही जब मनोमात्र से रूप, शब्दादि सर्वविषयविशेष का ज्ञान ही हो जायेगा तो व्यक्ति अन्ध-बधिर किस कारण से कहा जायेगा? इसलिये यदि इन्द्रिय को घटादि-गत विशेषविषयक भी नहीं माना जायेगा तो इन्द्रिय के अविषय घटादिगत विशेष-रूप विषय का मन से अनुव्यवसायज्ञान जिसको पौरुषेय-बोध कहते हैं, कैसे होगा?

---

1. क छ—**स्वरूपमिति** उपलभ्यते, ख ग घ च—**स्वरूपमिति** नोपलभ्यते।
2. क ख ग घ च—**सः** उपलभ्यते, छ—**सः** नोपलभ्यते।

अतः यह मानना पड़ता है कि चक्षुरादि इन्द्रियाँ पदार्थगत सामान्य-विशेष उभय-विषय वाली होती हैं।

इन्द्रियों के '**स्वरूपाख्य**' रूप का विश्लेषण किया जा रहा है—

## योगवार्त्तिकम्

**इन्द्रियाणां द्वितीयं रूपमाह—स्वरूपमिति। प्रकाशात्मनो बुद्धिसत्त्वस्य कार्या येऽयुतसिद्धा अवयवभेदाः सात्त्विकाहंकाररूपास्तेष्वनुगतः सामान्यविशेषरूपयोः समूहो द्रव्यमिन्द्रियमित्यर्थः। तत्र विशेषाः ग्रहणरूपा नीलपीताद्याकाराः परिणामभेदाः, सामान्यं च चक्षुष्ट्वादीति। ननु पूर्वसूत्रवदत्रापि स्वरूपं केवलं सामान्यमेवोचितम्, अन्यथा ग्रहणाख्यप्रथमरूपस्याप्यत्रैव प्रवेशापत्तेरिति चेत्? सत्यम्—सामान्यप्राधान्येनैव स्वरूपत्वमत्रापि विवक्षितम्, तथाऽपि भूतवदिन्द्रियस्यापि सामान्यविशेषाभ्यामत्यन्त[1]निषेधप्रतिषेधायैव समुदायो द्रव्यमित्युक्तम्।**

सम्प्रति, भाष्यकार इन्द्रियों के द्वितीय स्वरूपाख्य रूप का निरूपण करते हैं— '**स्वरूपमिति।**' प्रकाशात्मक बुद्धिसत्त्व के जो अयुतसिद्धावयवभेद वाले सात्त्विक अहंकारप्रधान कार्य हैं, उनमें अनुगत रहने वाला सामान्यविशेषोभयरूपात्मक जो समूहरूप द्रव्य है, वह '**इन्द्रिय**' कहा जाता है। भाव यह है कि प्रकाशरूप बुद्धि का कार्य प्रकाशरूप अहंकार तथा प्रकाशरूप अहंकार का कार्य प्रकाशरूप इन्द्रिय, यही इन्द्रियों का '**स्वरूप**' नामक द्वितीय रूप है। इन्द्रियों के सामान्य और विशेष इन दो रूपों में ग्रहणरूप नील, पीताद्याकार परिणामभेद '**विशेष**' हैं तथा चक्षुष्ट्वादि '**सामान्य**' रूप हैं।

**शङ्का—स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः** (३/४४) इस पूर्ववर्ती सूत्र की भाँति यहाँ भी इन्द्रियों के द्वितीय '**स्वरूप**' रूप को सामान्यात्मक ही मानना औचित्यपूर्ण है, अन्यथा इन्द्रियों के प्रथम '**ग्रहणाख्य**' रूप के भी द्वितीय '**स्वरूपाख्य**' रूप में प्रविष्ट होने की आपत्ति आयेगी?

**समाधान**—पूर्वपक्षी का उक्त कथन उचित है, किन्तु द्रव्य के सामान्यरूप के प्राधान्य को ध्यान में रखकर ही यहाँ '**स्वरूप**' को इन्द्रियों का द्वितीय रूप कहा गया है, फिर भी भूत की तरह इन्द्रियाँ भी सामान्य-विशेष से अत्यन्त भिन्न नहीं हैं यह बतलाने के लिये अर्थात् इन्द्रियों में सामान्यविशेषोभयात्मकता के आत्यन्तिक निषेध का प्रतिषेध करने के लिये ही इन्द्रियों को सामान्य-विशेष का समुदायरूप '**द्रव्य**' कहा गया है।

सम्प्रति, इन्द्रियों के '**अस्मिताख्य**' रूप का विश्लेषण किया जा रहा है—

---

1. क ख ग घ—**भेदस्य**, च छ—**निषेध**०।

### योगवार्त्तिकम्

**तेषां तृतीयं रूपमिति। तेषामिन्द्रियाणां तृतीयं रूपम्. [1]अस्मिताशब्देनोक्तोऽहंकारः, तत्राभिमानाख्यवृत्तिभ्रमनिरासायास्मितालक्षण इति विशेषणम्। अस्मितावृत्तिक इत्यर्थः। ननु कथमहंकार इन्द्रियाणां रूपमित्याकाङ्क्षायामाह—तस्येति। यथा तन्मात्रस्य सामान्यस्य भूतानि विशेषा एवमहंकारस्य सामान्यस्य चक्षुरादीनि विशेषाः, कार्यत्वात्। अत इन्द्रियेष्वनुगततयाऽहंकार इन्द्रियाणां रूपं भूतानां तन्मात्रवदिति भावः।**

भाष्यकार इन्द्रियों के तृतीय रूप का वर्णन करते हैं—'**तेषां तृतीयं रूपमिति।**' इन्द्रियों का तृतीय रूप '**अस्मिता**' शब्द से उक्त '**अहंकार**' है। अर्थात् इन्द्रियों का कारणभूत अहंकार इन्द्रियों का तृतीय '**अस्मिताख्य**' रूप है। कोई अभिमानाख्य वृत्ति को इन्द्रियों का तृतीय रूप समझने का भ्रम न करे, तदर्थ '**अस्मितालक्षणोऽहंकारः**' भाष्य में '**अस्मितालक्षणः**' यह विशेषण पद दिया गया है। '**अस्मितालक्षण**' पद का अर्थ '**अस्मितावृत्तिक**' है। अर्थात् अस्मितावृत्ति वाला अहंकार इन्द्रियों का '**अस्मिताख्य**' तृतीय रूप है।

**शङ्का**—अहंकार इन्द्रियों का रूप कैसे हो सकता है?

**समाधान**—ऐसी आकाङ्क्षा होने पर भाष्यकार कहते हैं—'**तस्येति।**' जिस प्रकार तन्मात्रसामान्य के पृथिव्यादि भूत विशेष रूप हैं उसी प्रकार अहंकारसामान्य के चक्षुरादि विशेष रूप हैं, क्योंकि भूत और इन्द्रियाँ अपने-अपने कारण तन्मात्र और अहंकार की कार्य हैं (और कार्य को कारण की विशेषावस्था कहा जाता है, जैसे मृत्तिका सामान्य के तत्तद् घट विशेष रूप हैं)। अतः इन्द्रियों में अनुगत रहने से अहंकार इन्द्रियों का सामान्यरूप उसी प्रकार है जिस प्रकार पृथिव्यादि भूतों में अनुगत रहने से तन्मात्र भूतों का सामान्यरूप माना जाता है।

सम्प्रति, इन्द्रियों के '**अन्वयाख्य**' रूप का विश्लेषण किया जा रहा है—

### योगवार्त्तिकम्

**इन्द्रियाणां चतुर्थं रूपमाह—चतुर्थमिति। महत्तत्त्वस्यापि चतुर्थरूपमध्ये प्रवेशाय व्यवसायात्मका इति गुणानां विशेषणम्। व्यवसायाख्यबुद्धिरूपेण परिणतास्तद्विशिष्टा इत्यर्थः। एतेन पूर्वोक्तभूतजयसूत्रेऽप्यन्वयाख्यचतुर्थरूपमध्ये महदहंकारयोः प्रवेश इत्युन्नेयम्, युक्तिसाम्यादिति। येषामिति। साहंकाराणि सान्तःकरणानि।**

भाष्यकार इन्द्रियों के चतुर्थ रूप का निरूपण करते हैं—'**चतुर्थमिति।**' महत्तत्त्व को भी इन्द्रियों के चतुर्थ '**अन्वयाख्य**' रूप में परिगणित करने के लिये भाष्यकार ने गुणों के विशेषण रूप में '**व्यवसायात्मकाः**' पद का प्रयोग किया है। इस प्रकार व्यवसायाख्य

---

1. क ख ग घ च छ—**अवयव**०।

बुद्धि रूप से परिणत तद्विशिष्ट '**त्रिगुण**' इन्द्रियों का '**अन्वयाख्य**' रूप है। इससे पूर्वोक्त भूतजय के सूत्र में भी भूतों के अन्वयाख्य चतुर्थ रूप में समानयुक्ति से महत् और अहंकार का प्रवेश कर लेना चाहिये। वार्त्तिककार आगे के भाष्य को उठाते हैं– '**येषामिति**।' भाष्य में प्रयुक्त '**साहंकाराणि**' पद का अर्थ है–'**सान्तःकरणानि**। अन्तःकरण सहित इन्द्रियाँ गुणों का परिणाम हैं। अर्थात् गुण इन्द्रियों का अन्वयाख्य रूप हुआ।

सम्प्रति, इन्द्रियों के '**अर्थवत्त्व**' रूप का विश्लेषण किया जा रहा है–

### योगवार्त्तिकम्

**पञ्चमं रूपमाह–गुणेष्विति। इन्द्रियप्रकृतिगुणेष्वित्यर्थः। सूत्रवाक्यार्थं व्याचष्टे– पञ्चस्विति। यथाक्रमं ग्रहणादिक्रमेण संयमः। कार्य इति [1]शेषः। ततश्च वत्सानुसारिण्य इव गावोऽस्य संकल्पानुविधायिन्य इन्द्रियप्रकृतयो भवन्तीति शेषः॥४७॥**

भाष्यकार इन्द्रियों के पञ्चम रूप का निरूपण करते हैं–'**गुणेष्विति**।' इन्द्रियों के प्रकृतिभूत गुणों में अनुगत जो पुरुषार्थवत्ता है, वही इन्द्रियों का अर्थवत्त्वाख्य पञ्चम रूप है। भाष्यकार सूत्रार्थ करते हैं–'**पञ्चस्विति**।' इन्द्रियों के इन ग्रहणादि रूपों में यथाक्रम संयम करना चाहिये। '**कार्यः**' यह सूत्रवाक्य का शेष है। इस प्रकार इन्द्रियजय से इन्द्रियाँ और उनके कारण (प्रकृति) रूप अहंकारादि तत्त्व उसी प्रकार इन्द्रियजयी के संकल्प का अनुसरण करते हैं जिस प्रकार गौएँ वत्स का अनुसरण करती हैं॥४७॥

सम्प्रति, इन्द्रियजय द्वारा प्राप्त सिद्धि का प्रतिपादक सूत्र इस प्रकार है–

### योगसूत्रम्

## ततो [2]मनोजवित्वं विकरणभावः प्रधानजयश्च॥४८॥

'इन्द्रियजय' से मनोजवित्व, विकरणभाव तथा प्रधानजय सिद्ध होते हैं॥४८॥

### व्यासभाष्यम्

**कायस्यानुत्तमो गतिलाभो मनो[3]जवित्वम्। विदेहानामिन्द्रियाणामभिप्रेतदेश-कालविषयापेक्षो वृत्तिलाभो विकरणभावः। सर्वप्रकृतिविकारवशित्वं प्रधानजय**

---

1. क ख ग घ–**ततश्च तत्र तत्र जयं कृत्वा पञ्चरूपजयात् सर्वरूपैरिन्द्रियजयस्तद्वशीकारो भवतीत्यर्थः** ( **शेषः**–पश्चात् ) उपलभ्यते, च छ–**ततश्च...भवतीत्यर्थः** नोपलभ्यते।
2. **मनोजवत्वं मनोजजवित्वं**–इति पाठान्तरे।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**जवित्वं**, ब–**जवत्वम्**।

**इति। एतास्तिस्रः सिद्धयो [1]मधुप्रतीका उच्यन्ते। एताश्च करण[2]पञ्चस्वरूपजया-दधिगम्यन्ते॥४८॥**

शरीर को सर्वश्रेष्ठ गति की प्राप्ति होना 'मनोजवित्व' है। शरीर के बाहर स्थित (शरीररूप आश्रय के विना भी) इन्द्रियों का अभिलषित देश, काल तथा सूक्ष्म विषयों में भी वृत्तिलाभ होना 'विकरणभाव' कहलाता है। प्रकृति के यच्च-यावत् विकारों का स्वामित्व प्राप्त होना 'प्रधानजय' है। ये तीन सिद्धियाँ 'मधुप्रतीका' कही जाती हैं और ये पाँचों करणरूप इन्द्रियों के उक्त पाँच रूपों को जीतने से प्राप्त होती हैं॥४८॥

## तत्त्ववैशारदी

**पञ्चरूपेन्द्रियजयात्सिद्धीराह–ततो मनोजवित्वं विकरणभावः प्रधानजयश्च । विदेहानामिन्द्रियाणां करणभावो विकरणभावः। देशः काश्मीरादिः। कालोऽतीतादिः। विषयः सूक्ष्मादिः। [3]सान्वयेन्द्रियजयात्सर्वप्रकृतिविकारवशित्वं प्रधानजयः। ता एताः सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णातैः। स्यादेतत्–इन्द्रियजयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु, प्रधानादीनां तत्कारणानां किमायातमित्यत आह–एताश्चेति। [4]करणाना-मिन्द्रियाणां पञ्च रूपाणि ग्रहणादीनि, तेषां जयात्। एतदुक्तं भवति–नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपि तु पञ्चरूपस्य। तदन्तर्गतं च प्रधानादीति॥४८॥**

इन्द्रिय के पाँच रूपों के जय से प्राप्त होने वाली सिद्धि को सूत्रकार बतलाते हैं--'**तत इति**।' '**विदेह**' अर्थात् शरीरनिरपेक्ष इन्द्रियों के करणत्व (करणभाव अर्थात् वृत्तिलाभ) को '**विकरणभाव**' कहते हैं। '**देश**' शब्द से काश्मीरादि का ग्रहण होता है। '**काल**' शब्द से अतीतादि को लिया जाता है। '**विषय**' शब्द से सूक्ष्मादि पदार्थों का संग्रह होता है। अर्थात् शरीरनिरपेक्ष विदेह इन्द्रियों की अभिलषित काश्मीरादि देश, अतीतादि काल तथा सूक्ष्मविषयक जो वृत्ति बनती है, उसे '**विकरणभाव**' नामक सिद्धि कहते हैं। '**अन्वय**' संज्ञक चतुर्थरूप सहित इन्द्रियजय होने से निखिल कारण और कार्य वश में हो जाते हैं। इसे ही '**प्रधानजय**' नामक सिद्धि कहते हैं। योग-शास्त्रज्ञों द्वारा ये तीनों सिद्धियाँ (मनोजवित्व, विकरणभाव तथा प्रधानवशित्व) '**मधुप्रतीका**' कही गई हैं।

---

1. क ख ग घ च ज त थ द ध न प फ ब भ म य र–**मधुप्रतीका उच्यन्ते**, छ झ–**मधुप्रतिकार उच्यते**।
2. क ख ग च छ ज झ त थ न भ–**पञ्चकस्वरूप**0, घ प फ य र–**पञ्चकरूप**0, द ध–**पञ्चरूप**0, ब म–**पञ्चस्वरूप**0।
3. क ख ग–**साधनेन्द्रिय**0, घ च छ ज झ त थ ध न–**सान्वयेन्द्रिय**0।
4. क घ च छ ज झ त थ द ध न–**करणानां**, ख ग–**कारणानाम्**।

**शङ्का**—इन्द्रियजय से विषयसहित इन्द्रियाँ ही योगी के अधीन हों, उनके कारणभूत प्रधानादि की वश्यता इन्द्रियजय की फलश्रुति कैसे हो सकती है? अर्थात् प्रधानजय को इन्द्रियजय का फल मानना युक्तियुक्त नहीं है।

**समाधान**—इस पर भाष्यकार बतलाते हैं—'**एताश्चेति**।' ये तीन प्रकार की सिद्धियाँ, चक्षुरादि के जो ग्रहणादि पाँच रूप हैं, उनके जय से प्राप्त होती हैं। अभिप्राय यह है—इन्द्रियमात्र के जय से ये सिद्धियाँ प्राप्त नहीं होती हैं, अपितु इन्द्रियों के पञ्च रूपों के जय से प्राप्त होती हैं और इन पाँच रूपों में प्रधानादि भी आते हैं। अतः '**इन्द्रियजय**' से जो '**प्रधानजय**' कहा गया है, वह युक्तियुक्त है॥४८॥

बालप्रिया—

'**मनोजवित्वम्**'—भाव यह है कि इन्द्रियजयी का शरीर भी मन की भाँति अनेक योजन अन्तरित (व्यवहित) देशपर्यन्त त्वरित पहुँच जाता है। इस प्रकार मन के समान शरीर का द्रुतगति वाला होना '**मनोजवित्व**' कहलाता है। '**मनसः जयः वेगः गतिः इति मनोजवः सोऽस्ति अस्येति मनोजवी, तस्य भावो मनोजवित्वम्**।'

'**विकरणभावः**'—भाव यह है कि शरीर की अपेक्षा न करके व्यापार करने में समर्थ इन्द्रियों से युक्त होना '**विकरणभाव**' है। योगी जिस देशादि में वृत्तिलाभ की इच्छा करता है, उसी देशादि में उसे यथेष्ट वृत्तिलाभ होता है। जैसे स्रुघ्न (आगरा) देश में रहकर ही पाटलिपुत्र के विष्णुशर्मा को देख लेता है। वहीं रहकर ही पाटलिपुत्र की आवाज सुन लेता है। '**विगतानि देहाद्दूरीभूतानि करणानि इन्द्रियाणि यस्य स योगी विकरणः तस्य भावः स्थितिः तथोक्तः विकरणभावः**'॥४८॥

## योगवार्त्तिकम्

**इन्द्रियजयात्सिद्धीराह—ततो मनोजवित्वं विकरणभावः प्रधानजयश्च। व्याचष्टे—कायस्येति। अनुत्तमो मनोवच्छीघ्रतरः कर्मेन्द्रियवृत्तिविजयाद् भवति। विकरणभावश्च स्वरूपमाह—विदेहानामिति। स्थूलदेहसंपर्करहितानामित्यर्थः। इन्द्रियाणामिति करणसामान्योपलक्षणम्। विकरणभावशब्दस्य योगार्थमाह—अभिप्रेतेति। अभिप्रेतकालदेशविषयापेक्षस्तदपरित्यागी यत्रैव देशादिषु वृत्तिलाभ इष्यते तत्रैव भवतीत्यर्थः। तथा च विकरणभावो विकीर्णतास्वभावो व्यापितेति यावत्। य एवंविधकरणभावोपपन्ना योगिनस्त एव स्थाने स्थाने विदेहा इत्युक्ताः। सर्वेति। सर्वासां व्यक्तिभेदेनानन्तानां भूतेन्द्रियप्रकृतीनां सत्त्वादिगुणानां तद्विकाराणां च सर्वेषां स्वेच्छयाऽनुविधानं प्रधानजय इत्यर्थः। ननु भूतप्रकृतिजयो भूतजयो वा कथमिन्द्रियजयादिति चेत्? न, भूतजयरूपपूर्वभूमिकायामेव तयोर्जितत्वेनोत्तरभूमिकायामेकीकृत्य सर्वजयकथनादिति। अत एव च प्रधानजयिनः पूर्वं स्थाने स्थाने प्रकृतिलया इत्युक्ताः। प्रकृत्या सहैकतां गता इति प्रकृतिलयाः प्रकृतिवशिनः। एतास्तिस्र इति। अत्र सिद्धिविशेषाणामेव मधुप्रतीकसंज्ञाऽवगमाद्योगभूमिचतुष्टयस्य पृथगेव पश्चाद्वक्ष्यमाणत्वाच्च योग-**

**भूमेर्मधुप्रतीकसंज्ञेति कस्यचिद्व्याख्यानमबोधमूलत्वादुपेक्षणीयम्। तत इति सौत्रं पदं व्याचष्टे—एताश्चेति। नन्विन्द्रियजये कथं प्रकृतिमहदहंकाराणां जय इति चेत्? न, इन्द्रियरूपेष्वन्तिमरूपत्रयत्वात्तेषामिति॥४८॥**

सूत्रकार इन्द्रियजय से प्राप्त होने वाली सिद्धियों को सूत्रांकित करते हैं–'**तत इति**।' भाष्यकार सूत्र की व्याख्या करते हैं–'**कायस्येति**।' (संयम द्वारा वाक्, पाणि, पाद, पायु और उपस्थ संज्ञक) कर्मेन्द्रियों के वचन, आदान, विहरण, उत्सर्ग तथा आनन्दाख्य वृत्तियों पर विजय प्राप्त करने से शरीर को '**अनुत्तम**' अर्थात् मन की भाँति शीघ्रतर गति प्राप्त होती है। यही '**मनोजवित्व**' सिद्धि है। भाष्यकार '**विकरणभाव**' का स्वरूप प्रतिपादित करते हैं–'**विदेहानामिति**।' '**विदेह**' शब्द का अर्थ है–स्थूलदेह के सम्पर्क से रहित। '**इन्द्रिय**' शब्द करणसामान्य का उपलक्षक है। भाष्यकार '**विकरणभाव**' शब्द के यौगिक अर्थ को बतलाते हैं–'**अभिप्रेतेति**।' शरीरनिरपेक्ष इन्द्रियादि करणसामान्य को अभीष्ट काल, देश तथा विषय की अपेक्षा से कालादि का परित्याग किये विना जिस किसी देशादियों में वृत्तिलाभ की इच्छा होती है, उसी देशादि में वह वृत्तिलाभ करता है। इस प्रकार विकीर्णता अर्थात् व्यापिता के स्वभाव को '**विकरणभाव**' कहते हैं। इस प्रकार के करणभाव (विकरणभाव) को प्राप्त हुए योगियों को स्थान-स्थान पर शास्त्र में '**विदेह**' नाम से अभिहित किया गया है। वार्त्तिककार प्रधानजयसम्बन्धी आगे के भाष्य को उठाते हैं–'**सर्वेति**।' '**सर्वासाम्**' अर्थात् व्यक्तिभेद से असंख्येय भूतेन्द्रियों के कारणभूत (प्रकृतिभूत) सत्त्वादि गुणों और उनके निखिल कार्यों (विकारों) को स्वेच्छापूर्वक अनुशासित (आदेशित) करना '**प्रधानजय**' है।

**शङ्का**–इन्द्रियजय से कैसे भूतजय अथवा भूतप्रकृतिजय हो सकता है?

**समाधान**–ऐसा नहीं कहना चाहिये, क्योंकि भूतजयरूप पूर्वभूमिका में ही भूत और उसकी प्रंकृति का जय हो जाता है, इसलिये उत्तरभूमिका में इन सभी को एकत्रित करके सभी का जय होता है, ऐसा बताया जा रहा है। अतः ये ही प्रधानजयी योगी लोग ग्रन्थ में यत्र-तत्र '**प्रकृतिलय**' शब्द से पीछे कहे गये हैं। '**प्रकृत्या सहैकतां गता इति प्रकृतिलयाः**'–इस व्युत्पत्ति के अनुसार प्रकृति के साथ एकता को प्राप्त हुए योगी '**प्रकृतिलय**' कहे जाते हैं। इस प्रकार प्रकृतिवशी को '**प्रकृतिलय**' कहते हैं। वार्त्तिककार आगे के भाष्य को उठाते हैं–'**एतास्तिस्र इति**।' प्रस्तुत सन्दर्भ में मनोजवित्व, विकरणभाव तथा प्रधानजय–इन तीन सिद्धिविशेषों का '**मधुप्रतीका**' संज्ञा से ही अवबोध होने से तथा योगभूमिचतुष्टय में इनका पृथक्तया उल्लेख आगे किया जाने वाला होने से जो लोग योगभूमिसामान्य को ही '**मधुप्रतीका**' कहते हैं, उनका यह कथन भ्रमात्मक होने से उपेक्षणीय है। सूत्रस्थ '**ततः**' पद की व्याख्या भाष्यकार

करते हैं–'**एताश्चेति**।' ये तीन प्रकार की सिद्धियाँ चक्षुरादि इन्द्रियों के ग्रहणादि पाँच रूपों में जय से प्राप्त होती हैं।

**शङ्का**–इन्द्रियजय होने पर कैसे प्रकृति, महत् और अहंकार पर विजय प्राप्त होती है?

**समाधान**–ऐसी शंका नहीं करनी चाहिये, क्योंकि इन्द्रियों के पाँच रूपों में से अन्तिम तीन रूपों के जय से प्रकृति, महत् और अहंकार का भी जय हो जाता है॥४८॥

**योगसूत्रम्**

## सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावा[1]धिष्ठातृत्वं [2]सर्वज्ञातृत्वं [3]च॥४९॥

बुद्धि और पुरुष के अन्यत्व की ख्याति में ही प्रतिष्ठित योगी को सभी पदार्थों का स्वामित्व और सर्वज्ञत्व सिद्ध होता है॥४९॥

**व्यासभाष्यम्**

**निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम्। [4]सर्वात्मानो [5]गुणा व्यवसायव्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनो[6]पस्थिता इत्यर्थः। सर्वज्ञातृत्वं [7]सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थ इति। एषा विशोका नाम सिद्धिः, यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति॥४९॥**

राजस एवं तामस मलों से शून्य सत्त्वमयी बुद्धि के अत्यन्त निर्मल हो जाने पर उत्कृष्ट वशीकारसंज्ञक वैराग्य में स्थित बुद्धि और पुरुष के अन्यत्व की ख्यातिमात्र के रूप में प्रतिष्ठित योगी को सभी वस्तुओं का स्वामित्व प्राप्त होता है। अर्थात् ज्ञानात्मक और ज्ञेयात्मक सभी रूपों वाले गुण इस

---

1. **अधिकर्तृत्वं**–इति पाठान्तरम्।
2. **सर्वविज्ञातृत्वं**–इति पाठान्तरम्।
3. **च**–नोपलभ्यते।
4. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**सर्वात्मानः**, ब–**सर्वात्मना**।
5. क ख ग घ च छ ज त थ द ध न प फ भ म य र–**गुणा व्यवसायव्यवसेयात्मकाः**, झ ब–**गुणा अध्यवसायात्मकताः**।
6. क ख ग च छ ज झ त थ द ध न ब भ म–**उपस्थिताः**, घ प फ र–**उपतिष्ठन्ते**, य–**उपस्थिताः/उपतिष्ठन्ते** नोपलभ्यते।
7. क ग घ च छ झ त थ द ध न प फ म य र–**सर्वात्मनां**, ख ज–**सर्वात्मना**, भ–**सर्वात्मानां**, ब–**सर्वात्मकानाम्**।

अधिकारी जीव के प्रति समस्त भोग्य पदार्थों के रूप में उपस्थित होते हैं और उसे सर्वज्ञता प्राप्त होती है। अर्थात् भूत, भविष्यत् तथा वर्तमान धर्मों के रूप में स्थित सभी रूपों वाले गुणों का एक साथ विवेकज ज्ञान होता है। यह 'विशोका' नाम की सिद्धि है, जिसको प्राप्त करके योगी सर्वज्ञ, दग्धक्लेशबन्धन तथा स्वामी होकर विचरण करता है॥४८॥

### तत्त्ववैशारदी

**त एते ज्ञानक्रियारूपैश्वर्यहेतवः संयमाः साक्षात्पारम्पर्येण च स्वसिद्ध्युपसंहारसंपादितश्रद्धाद्वारेण यदर्थास्तस्याः सत्त्वपुरुषान्यताख्यातेरवान्तरविभूतीर्दर्शयति—सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च। निर्धूतरजस्तमोमलतया वैशारद्यम्। ततः परा वशीकारसंज्ञा। रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत्, तदुपशमे तु तद्वश्यं योगिनो वशिनः। तस्मिन्वश्ये योगिनः सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम्। एतदेव विवृणोति—सर्वात्मान इति। व्यवसायव्यवसेयात्मानो जडप्रकाशरूपा इत्यर्थः। तदनेन क्रियैश्वर्यमुक्तम्। ज्ञानैश्वर्यमाह—सर्वज्ञातृत्वमिति। अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय योगिजनप्रसिद्धां संज्ञामाह—एषा विशोकेति। क्लेशाश्च बन्धनानि च कर्माणि, तानि क्षीणानि यस्य स तथा॥४९॥**

साक्षात् और स्वार्थविषयक संयम की सिद्धि से उत्पन्न होने वाली श्रद्धा के द्वारा परम्परया ज्ञानरूपसिद्धि और क्रियारूपसिद्धि के हेतुभूत संयम जिस प्रयोजन के लिये हैं, उस सत्त्वपुरुषान्यताख्यातिरूप मुख्यसिद्धि की अवान्तर सिद्धियों को सूत्रकार बतलाते हैं—'**सत्त्वेति**।' (मैत्र्यादि भावना से) चित्त के रजस् और तमस् रूप मलों के प्रक्षालित हो जाने से चैत्तिक निर्मलता (विशारदता) होती है, जिससे उत्कृष्टकोटिक '**वशीकार**' संज्ञक वैराग्य प्राप्त होता है। भाव यह है—रजोगुण एवं तमोगुण से युक्त चित्तसत्त्व किसी के वश में नहीं रहता है, किन्तु मल के प्रक्षालित होने पर '**वशीकार**' संज्ञक वैराग्य योगी के वश में हो जाता है। ऐसी वश्यता होने पर अर्थात् चित्त के वशीभूत होने पर 'सत्त्वपुरुषान्यताख्याति' (विवेकज्ञान) में प्रतिष्ठित योगी निखिल पदार्थों का अधिष्ठाता (स्वामी) बन जाता है। इसी बात का स्पष्टीकरण भाष्यकार करते हैं—'**सर्वात्मान इति**।' '**व्यवसायव्यवसेयात्म**' शब्द का अर्थ है—जड़प्रकाशरूप। अर्थात् जड़प्रकाशरूप जितने भी गुणमय पदार्थ हैं, वे सबके सब क्षेत्रज्ञरूपी स्वामी के प्रति सम्पूर्ण भोग्य तथा दृश्य के रूप में उपस्थित होते हैं। इस प्रकार क्रियैश्वर्य का प्रतिपादन किया गया। सम्प्रति, भाष्यकार ज्ञानैश्वर्य को बतलाते हैं—'**सर्वज्ञातृत्वमिति**।' (इस प्रकार विवेकज्ञानसम्पन्न योगी को भूत, वर्तमान तथा भविष्यत् वस्तु के रूप में परिणत तीनों गुणों को लेकर एक साथ प्रादुर्भूत विवेकज्ञानजन्य सर्वज्ञता प्राप्त होती है)। इन दो प्रकार की सिद्धियों में भी

वैराग्योत्पादन के लिये योगिजनप्रसिद्ध संज्ञा को भाष्यकार बतलाते हैं–'**एषा विशोकेति**।' तत्त्ववैशारदीकार '**विशोका**' का विग्रह करते हैं–'**क्लेशाश्च बन्धनानि च कर्माणि, तानि क्षीणानि यस्य स तथा विशोका**' अर्थात् क्लेश और बन्धनकारी कर्म जिसके क्षीण हो चुके हैं, इस प्रकार की '**विशोका**' नाम की सिद्धि वाला योगी होता है। अर्थात् '**विशोका**' नामक सिद्धि को प्राप्त करके योगी सर्वज्ञ, अविद्यादि क्लेशों के बन्धन से रहित तथा सबको वश में करके सर्वज्ञ अप्रतिहत रूप से विचरण करता है॥४९॥

**बालप्रिया–**

'**संयमाः**'–अवतरणिका में प्रयुक्त इस पद का अन्वय '**यदर्थाः**' पद के साथ किया जाता है।

'**साक्षात्पारम्पर्येण**'–स्वार्थसंयमादि का साक्षात् प्रयोजन विवेकख्याति है और परम्परया वे (स्वार्थसंयमादि) अणिमादि सिद्धियों के जनक हैं। पारम्पर्य सिद्धि का व्याख्यान तत्त्ववैशारदीकार ने '**स्वसिद्ध्युपसंहार**' द्वारा किया है।

'**सर्वज्ञातृत्वम्**'–भाव यह है कि अतीत, अनागत तथा वर्तमान रूप से परिणत गुणों का युगपत् यथार्थसाक्षात्कार (विवेकज्ञान) होता है॥४९॥

## योगवार्त्तिकम्

**तदेवं ग्राह्यग्रहणसंयमयोः सिद्धिमुक्त्वा ग्रहीतृसंयमस्य सिद्धिमाह–सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च। मात्रशब्देन संयमरूपा ख्यातिर्लब्धा, तथा सत्त्वपुरुषान्यतासंयमस्य धर्मधर्म्यभेदात् तद्वतश्चित्तस्य सर्वभावेषु प्रकृतितत्कार्यपुरुषेष्वधिष्ठातृत्वं स्वेच्छया विनियोक्तृत्वं स्वदेह इव भवति, तथा प्रकृतिपुरुषादिसर्वज्ञातृत्वं च भवतीत्यर्थः। अत्रापि संयमः साक्षात्कारपर्यन्तो बोध्यः, संयमनिष्पत्तेरेव सिद्धिहेतुत्वात्। ननु परार्थात्स्वार्थसंयमादितिसूत्रोक्तसंयमतोऽस्य को भेदो येन तत्र पुरुषज्ञानं सिद्धिरत्रान्या सिद्धिरिति सिद्धिभेदः स्यात्? उच्यते–तत्र पौरुषेयप्रत्यये सुखाद्यनुभवरूपे परिच्छिन्न एव संयम उक्तो न त्वपरिच्छिन्ने पुरुषे, अत्र तु तेन संयमेन ज्ञाने परिपूर्णे पुरुषे बुद्धिविवेकसंयम उच्यत इति विशेष इति। ननु सत्त्वेति विशेषवचनमनुचितं गुणपुरुषान्यतेत्याद्येव वक्तुमु[1]चितमिति चेत्? न, रजस्तमोभ्यां पुरुषे साक्षादविवेकाभावाद् बुद्धिसत्त्वाविवेकद्वारैव देहेन्द्रियादिष्वविवेकात्, स्वप्नबाधिर्याद्यवस्थासु चेतने देहेन्द्रियादिविवेकस्य योगारम्भकाल एव बालकैरप्यवधृतत्वाच्चेति।**

इस प्रकार '**ग्राह्य**' और '**ग्रहण**' विषयक संयमों की सिद्धि का प्रतिपादन करके सूत्रकार '**ग्रहीतृ**' विषयक संयम की सिद्धि को सूत्राङ्कित करते हैं–'**सत्त्वेति**।' (सूत्र में

---

1. क घ च छ–**उचितं**, ख ग–**युक्तम्**।

**'संयम'** शब्द का प्रयोग नहीं हुआ है तथापि) सूत्रस्थ **'मात्र'** शब्द से संयमरूपा ख्याति अर्थात् संयमसाध्य विवेकज्ञान गृहीत होता है। इस प्रकार **'सत्त्वपुरुषान्यताख्याति'** विषयक संयम का अर्थात् वृत्तिरूप धर्म और वृत्तिमान् रूप धर्मी का अभेद होने से सत्त्वपुरुषान्यतावृत्तिविशिष्ट चित्त की **'सर्वभाव'** अर्थात् प्रकृति और तत्कार्य पुरुषों में **'अधिष्ठातृत्व'** अर्थात् स्वदेह की भाँति स्वेच्छापूर्वक विनियोक्तृता (नियन्त्रिता) होती है तथा प्रकृति-पुरुषादि सभी (जड-चेतन) पदार्थों की ज्ञातृता होती है। अर्थात् सत्त्वपुरुषान्यताख्यातिमान् चित्त सभी पदार्थों का अधिष्ठाता तथा यथार्थ बोद्धा हो जाता है। प्रकृत सूत्र में भी प्रकृति-पुरुष के भेदज्ञानरूपसाक्षात्कारपर्यन्त संयम किया जाता है, ऐसा समझना चाहिये, क्योंकि संयमनिष्पत्ति (जय) में ही सिद्धि का कारणत्व अन्तर्निगूढ है।

**शङ्का**—**'सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्स्वार्थसंयमात् पुरुषज्ञानम्'** (४/३५) इस पूर्वोक्त सूत्र में कथित संयम का प्रकृत सूत्र के संयम से क्या अन्तर (भेद, पार्थक्य, वैशिष्ट्य) है, जिसके कारण पूर्वोक्त संयमजन्य **'पुरुषज्ञान'** सिद्धि का प्रकृत सूत्र की सिद्धि से अन्तर किया जा सके?

**समाधान**—वार्त्तिककार उत्तर देते हैं—पूर्व सूत्र (४/३५) में सुखाद्यनुभवरूप परिच्छिन्न (सीमित) पौरुषेयप्रत्यय में ही संयम करना बतलाया गया है, न कि अपरिच्छिन्न पुरुष में भी। जब कि प्रकृत सूत्र में पूर्वविषयक संयम से ज्ञात परिपूर्ण पुरुष में बुद्धि से भेदपरक संयम का अभिधान हुआ है। यही दोनों संयमों में अन्तर है। (फलतः सिद्धि में भी अन्तर आना स्वाभाविक है)।

**शङ्का**—सूत्र में **'सत्त्व'** इस पदविशेष का अभिधान न्यायपूर्ण नहीं है। सूत्र के प्रारम्भ में **'गुणपुरुषान्यता'** ऐसा कहना ही उचित प्रतीत होता है?

**समाधान**—उक्त शंका नहीं करनी चाहिये, क्योंकि पुरुष में साक्षात् रूप से रजोगुण और तमोगुणनिबन्धनात्मिका अविवेकवृत्ति का अभाव ही रहता है। इसलिये सत्त्व-गुणप्रधान बुद्धि (बुद्धिसत्त्व) की अविवेकवृत्ति के द्वारा ही पुरुष को देह, इन्द्रियादि जड पदार्थों में आत्माभिमान होता है तथा स्वप्न, बधिर आदि अवस्थाओं में चेतन में देहेन्द्रियादि का पार्थक्य अर्थात् विवेकबोध योगाभ्यास के प्रारम्भकाल में ही बालकों को भी निश्चितरूप से हो जाता है।

## योगवार्त्तिकम्

**तदिदं सूत्रं व्याचष्टे—निर्धूतेति। परवैशारद्यं परमस्वच्छता अतिसूक्ष्मवस्तुप्रतिबिम्बोद्-ग्रहणसामर्थ्यमिति यावत्। परमवशीकारसंज्ञा च परमाणुपरममहत्त्वान्तोऽस्य वशीकार इत्युक्ता। रूपेण प्रतिष्ठस्य रूपप्रतिष्ठस्य। सर्वभावाधिष्ठातृत्वं विवृणोति—सर्वात्मान इति।**

**सर्वात्मान इत्यस्य विवरणं व्यवसायव्यवसेयात्मका इति। करणतद्विषयात्मका इत्यर्थः। अशेषदृश्येति। संकल्पमात्रेण पुरुषैः संयुक्ता असंयुक्ताश्चाशेषभोग्यवस्त्वाकारेण परिणता भूत्वोपतिष्ठन्ते योगिनम्। तत्र हेतुगर्भविशेषणम्—स्वामिनं क्षेत्रज्ञमिति। यतोऽसौ भोक्तृत्वात्प्रेरकोऽतस्तम् अयस्कान्तलोहवदुपतिष्ठन्त इत्यर्थः। [1]यद्वा यतोऽसौ स्वामी ईश्वरः क्षेत्रज्ञश्च परिणामक्षेत्राणि गुणादीनि प्रवर्त्तयति परिणामप्रकारैर्जानाति चेत्यर्थः। यद्यपि सर्वे पुरुषाः सर्वगुणानामविशेषेण स्वामिनस्तथाऽपि पापादिप्रतिबन्धात्सर्वे गुणाः [2]सर्वदा सर्वपुरुषान्न भोग्यत्वेनोपतिष्ठन्त इति भावः। तथा च श्रुतिः—स यदि पितृलोककामः संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिरिति।**

भाष्यकार प्रकृत सूत्र का विवरण करते हैं—'**निर्धूतेति**।' '**परवैशारद्य**' पद का अर्थ है—परम (पूर्ण) स्वच्छता। अर्थात् सूक्ष्मातिसूक्ष्म वस्तु के प्रतिबिम्ब को ग्रहण करने के सामर्थ्य को '**परवैशारद्य**' कहते हैं। तथा **परमाणुपरममहत्त्वान्तोऽस्य वशीकारः** (१/४०) सूत्र के द्वारा '**परमवशीकार**' संज्ञा पूर्व वर्णित है। (सत्त्वपुरुषान्यताख्यात्यात्मक) रूप से प्रतिष्ठित बुद्धिसत्त्व को '**रूपप्रतिष्ठ**' कहा गया है। भाष्यकार (सूत्र के मध्यम पद) '**सर्वभावाधिष्ठातृत्व**' का विश्लेषण (उद्‌घाटन) करते हैं—**सर्वात्मान इति**।' भाष्यकार ने स्वयं '**सर्वात्मानः**' पद को '**व्यवसायव्यवसेयात्मकाः**' पद के द्वारा विवृत किया है। अर्थात् इन्द्रियादि करण और उनके विषयभूत जितने भी गुणात्मक पदार्थ हैं, वे '**व्यवसायव्यवसेयात्मक**' शब्द से कथित हैं। वार्त्तिककार आगे के भाष्य को उठाते हैं—'**अशेषदृश्येति**।' व्यवसायव्यवसेयात्मक रूप से कथित ये त्रिगुणात्मक पदार्थ जो पुरुषों के साथ संयुक्त तथा असंयुक्त स्वभाव वाले हैं, वे अशेष भोग्यवस्तु के आकार से परिणत होकर योगी के संकल्पमात्र से उसके समीप उपस्थित होते हैं। योगी के समक्ष अशेष भोग्यपदार्थ के उपस्थित होने में भाष्यकार हेतुगर्भविशेषण देते हैं—'**स्वामिनं क्षेत्रज्ञमिति**।' चूँकि यह पुरुष भोक्ता होने से भोग्य का प्रेरक है, अतः जैसे लोह चुम्बक की ओर खिंचता जाता है, वैसे ही (विषयाकाराकारित बुद्ध्यादि) दृश्य पदार्थ भी पुरुष के सामने उपस्थित हो जाते हैं। अथवा इसकी व्याख्या ऐसे भी की जा सकती है—चूँकि यह स्वामिरूप पुरुष (आत्मा) ईश्वर तथा क्षेत्रज्ञरूप है, अतः वह परिणाम के स्थलीभूत सत्त्वादि गुणों को प्रवृत्त करता है तथा परिणाम की विधाओं (प्रकारों) के रूप से उन सत्त्वादि गुणों को जानता है। यद्यपि सभी पुरुष सभी सत्त्वादि गुणों के स्वामी हैं, तथापि पापादि रूप अवरोध (प्रतिबन्ध) के कारण सभी गुण सर्वदा सभी पुरुषों के प्रति भोग्यरूप से उपस्थित

1. क ग घ च छ—**यद्वा यतोऽसौ स्वामी ईश्वरः क्षेत्रज्ञश्च परिणामक्षेत्राणि गुणादीनि प्रवर्त्तयति परिणामप्रकारैर्जानाति चेत्यर्थः** उपलभ्यते, ख—**यद्वा...चेत्यर्थः** नोपलभ्यते।
2. क घ च छ—**सर्वदा सर्वपुरुषान्न**, ख—**न सर्वदा पुरुषान्**, ग—**सर्वदा पुरुषान्**।

नहीं होते हैं, ऐसा उक्त कथन का अभिप्राय है। ऐसी श्रुति भी है–'**स यदि... समुत्तिष्ठन्ति**' (छा.उप.८/२/१) अर्थात् 'यदि ब्रह्मन् (आत्मन्) पितृलोक की कामना करता है, तो उसके संकल्पमात्र से पितर लोग उपस्थित हो जाते हैं।'

सम्प्रति, सूत्र के अन्तिम अंश का विश्लेषण किया जा रहा है–

### योगवार्त्तिकम्

**क्रियैश्वर्यरूपां सिद्धिं व्याख्याय ज्ञानैश्वर्य[1]रूपां व्याचष्टे–सर्वज्ञातृत्वमिति। सर्वात्मनां सर्वपुरुषाणां बद्धमुक्तेश्वराणां शान्तादिरूपधर्मविशिष्टगुणानां चैकदैव ज्ञानं सर्वज्ञातृत्वमित्यर्थः। तस्य संज्ञा–विवेकजमिति। विवेकेन जायमानं यथाऽर्थसाक्षात्कार इति यावत्। [2]अथ वा प्रकृतिपुरुषविवेकाज्जायमानमित्यर्थः। सान्वयेयं संज्ञेति। [3]विशेषसंज्ञाया अन्वर्थतामाह–यां प्राप्येति। क्षीणक्लेशबन्धनत्वात् शोकशून्यतेति भावः॥४९॥**

इस प्रकार क्रियैश्वर्यप्रधान सिद्धि का प्रतिपादन करके भाष्यकार सम्प्रति, ज्ञानैश्वर्यप्रधान सिद्धि का विवरण करते हैं–'**सर्वज्ञातृत्वमिति।**' '**सर्वात्मनाम्**' अर्थात् बद्ध, मुक्त तथा ईश्वररूप सभी पुरुषों का तथा शान्तादिरूप धर्मविशिष्ट सत्त्वादि गुणों का एक बार में उत्पन्न हुआ ज्ञान '**सर्वज्ञातृत्व**' कहलाता है। सर्वज्ञातृत्व का पर्याय है–'**विवेकजमिति।**' विवेक से उत्पन्न यथोचित (यथावत्) साक्षात्कार को '**विवेकज**' कहते हैं। अथवा ऐसा भी कहा जाता है कि प्रकृति-पुरुष के भेद से उत्पन्न ज्ञान '**विवेकज**' कहलाता है। और यह नामकरण सार्थक है। भाष्यकार '**विवेकज**' इस संज्ञाविशेष की सार्थकता को बतलाते हैं–'**यां प्राप्येति।**' अविद्यादि क्लेशबन्धन के क्षीण (नष्ट, आत्यन्तिक अतीतावस्थ) होने पर शोकशून्यता को प्राप्त योगी सर्वज्ञ हो जाता है, ऐसा वैयासिक कथन का अभिप्राय है॥४९॥

अगला सूत्र है–

### योगसूत्रम्

## तद्वैराग्यादपि दोष[4]बीजक्षये कैवल्यम्॥५०॥

## पूर्वकथित सिद्धि के प्रति वैराग्य होने से दोष-बीजों का सर्वथा नाश होने पर (विदेह) 'कैवल्य' भी होता है॥५०॥

---

1. क ग घ च छ–**रूपां**, ख–**रूपाणाम्**।
2. क ग घ च छ–**अथ वा प्रकृतिपुरुषविवेकाज्जायमानमित्यर्थः** उपलभ्यते, ख–**अथवा...इत्यर्थः** नोपलभ्यते।
3. क ख ग घ–**विशोक०**, च छ–**विशेष०**।
4. **बीजस्य**–इति पाठान्तरम्।

**व्यासभाष्यम्**

**यदास्यैवं भवति क्लेशकर्मक्षये सत्त्वस्यायं [1]विवेकप्रत्ययो [2]धर्मः, सत्त्वं च हेयपक्षे न्यस्तं पुरुषश्चापरिणामी शुद्धोऽन्यः सत्त्वादिति। एवमस्य ततो विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्य[3]प्रसवसमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति। तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते। तदे[4]तेषां गुणानां मनसि कर्मक्लेशविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानाम[5]प्रतिप्रसवे पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यम्। [6]तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष [7]इति॥५०॥**

जब योगी के क्लेश और कर्म क्षीण हो जाते हैं तब उसको ऐसा ज्ञान होता है कि यह विवेकख्याति भी सत्त्वगुण का ही धर्म है और सत्त्वगुण तो त्याज्य कोटि में न्यस्त है, (दूसरी ओर) पुरुष तो अपरिणामी, शुद्ध तथा सत्त्वगुण से सर्वथा भिन्न है। इस प्रकार उस विवेकख्याति से विरक्त हुए इस योगी के चित्त में स्थित जो क्लेशबीज हैं, वे दग्ध तण्डुल के सदृश अंकुर को उत्पन्न करने में असमर्थ होकर मन के साथ ही विलीन हो जाते हैं। उनके विलीन हो जाने पर पुरुष फिर इस त्रिविधताप का अनुभव नहीं करता है। तब मन में कर्म, क्लेश और विपाक (संस्कार) रूप से अभिव्यक्त होने वाले तथा कृतकृत्य हो चुके गुणों के लीन हो जाने पर पुरुष का गुणों से आत्यन्तिक वियोग अर्थात् कैवल्य हो जाता है। उस दशा में पुरुष अपने चैतन्य स्वरूप में स्थित रहता है॥५०॥

**तत्त्ववैशारदी**

**संयमान्तराणां पुरुषार्थाभास[8]फलत्वाद्विवेकख्याति[9]संयमस्य पुरुषार्थतां दर्शयितुं विवेक-**

---

1. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**विवेक०**, ब—**विवेकी**।
2. घ च द ध न प फ ब भ म य र—**धर्मः** उपलभ्यते, क ख ग छ ज झ त थ—**धर्मः** नोपलभ्यते।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**अप्रसवसमर्थानि**, ब—**प्रसवासमर्थानि**।
4. क ग घ च छ ज झ त थं द ध न प फ भ म य र—**एतेषां**, ख ब—**एषाम्**।
5. क ख घ छ ज थ ध प ब य र—**प्रतिप्रसवे**, ग च द न फ भ म—**अप्रतिप्रसवे**, झ त—**प्रलयेऽप्रतिप्रसवे**।
6. क ख ग घ च छ ज झ त थ द ध न प फ ब म य र—**तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति** उपलभ्यते, भ—**तदा...इति** नोपलभ्यते।
7. छ त—**अयं सानन्दानुगतः सम्प्रज्ञातः समाधिर्विचारात्मकान्तःकरणत्यागाविति** (**इति**—पश्चात्) उपलभ्यते, क ख ग घ च ज झ थ द ध न प फ ब भ म—**अयं...इति** नोपलभ्यते।
8. क ख ग घ च छ ज झ थ द ध न—**फलत्वात्**, त—**फलवत्वात्**।
9. क ख ग—**संयमार्थतां**, घ च छ ज झ त थ द ध न—**संयमस्य पुरुषार्थताम्**।

**ख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह–तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्। यदास्य योगिनः क्लेशकर्मक्षयः [1]तदा एवं ज्ञानं भवति। किंभूतमित्याह–सत्त्वस्यायं विवेकप्रत्ययो धर्म इति शेषं तत्र तत्र व्याख्यातत्वात् सुगमम्॥५०॥**

अन्यविषयक संयम वास्तविक पुरुषार्थ फल वाले न होकर पुरुषार्थाभास होने से विवेकख्यातिविषयक संयम से वास्तविक पुरुषार्थफलकत्व को दिखलाने के लिये परवैराग्य द्वारा विवेकख्याति कैवल्य का हेतु है, इसे पतञ्जलि सूत्रित करते हैं– '**तदिति**।' जब इस योगी के (अविद्यादि) क्लेश तथा (क्लेशजन्य) कर्म (धर्माधर्म) का क्षय (नाश) होता है, तब इस प्रकार का ज्ञान प्रादुर्भूत होता है। (योगी को) किस प्रकार का ज्ञान होता है? इसे भाष्यकार बतलाते हैं–'**सत्त्वस्यायं विवेकप्रत्ययो धर्म इति**।' अर्थात् प्रकृति-पुरुष-विषयिणी यह भेदज्ञानात्मिका वृत्ति बुद्धि का धर्म है, पुरुष का नहीं और वृत्तिमती यह बुद्धि अनात्म होने से हेयपक्ष में न्यस्त होती है। भाष्य की अवशिष्ट पंक्तियों में निहित सिद्धान्त यथास्थान व्याख्यात (प्रतिपादित) हो जाने से सरल है॥५०॥

**बालप्रिया–**

'**तद्वैराग्यादपि**'–इस सूत्रांश की व्याख्या भाष्य के '**सत्त्वस्याऽयं**' से लेकर '**सत्त्वादिति**' पर्यन्त वाक्य के द्वारा की गई है।

'**दोषबीजक्षये**'–इस सूत्रांश का विवरण भाष्य के '**एवं न भुङ्क्ते**' वाक्य में द्रष्टव्य है।

'**कैवल्यम्**'–सूत्र के इस अन्तिम पद के व्याख्यान के लिये अवशिष्ट भाष्य है॥५०॥

## योगवार्त्तिकम्

**सर्वसिद्धिमूर्द्धन्यं विवेकख्यातिरूपसंयमस्य** परवैराग्यद्वारा मोक्षाख्यं सिद्ध्यन्तरमाह–**तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्।** अपिशब्दः कैवल्यमित्यनेनान्वेति। तथा च विवेकख्यातिनिष्ठात एव विवेकख्यातौ तस्या यथोक्तसिद्धौ च वैराग्ये सत्यसम्प्रज्ञातयोगेन दुःखदोषस्य बीजानामखिलवासनाकर्मणां चित्तेन सह लये सति पुरुषस्य कैवल्यं पुनर्गुणासंयोगरूपमपि भवतीत्यर्थः। वैराग्यकारणमाह–**यदेति**। क्लेशकर्मक्षयरूपकर्त्तव्यसमाधौ यदा योगिन एवं भवति एवं विचारो भवति। एवंशब्दार्थमाह–**सत्त्वस्येत्यादिना सत्त्वादीत्यन्तेन**। वैराग्यकारणमुक्त्वा कैवल्ये पुरुषार्थं प्रतिपादयति–**एवमस्येत्यादिना न भुङ्क्त इत्यन्तेन**। अत्र न भुङ्क्त इति वचनाद् भोगाभाव एव पुरुषार्थ इति स्मर्त्तव्यम्, दुःखाभावस्तु परम्परया पुरुषार्थ इति भावः। इदानीं सूत्रार्थं व्याचष्टे–**तदेतेषामिति**। तत् तदा यदेत्युक्तेनान्वयः, तदा परवैराग्यावस्थायां संस्काररूपाणां दुःखबीजगुणानां सत्त्वादिगुणस्थानां कार्यावस्थमनसि क्लेशादि-

1. न–तदा उपलभ्यते, क ख ग घ च छ ज झ त थ द ध–तदा नोपलभ्यते।

**रूपेणाभिव्यक्तिस्वभावकानां चरितार्थानां समाप्तपुरुषार्थानां प्रतिप्रसवे मनसा सह लये सति पुरुषस्यात्यन्तिको गुणवियोगः कैवल्याख्यो भवतीत्यर्थः। मोक्षेण पुरुषस्य [1]परिणाममपाकरोति–तदेति॥५०॥**

विवेकख्यातिरूप संयम परवैराग्य द्वारा (विवेकवृत्ति के प्रति हेयत्वजागरण द्वारा) समस्त सिद्धियों के शिरोमणिभूत मोक्षाख्य सिद्ध्यन्तर वाला होता है अर्थात् कैवल्य को प्राप्त कराने वाला होता है, ऐसा पतञ्जलि सूत्रांकित करते हैं–'**तदिति**।' अर्थक्रम की अपेक्षा पाठक्रम दुर्बल होता है–इस सिद्धान्त के परिप्रेक्ष्य में वार्त्तिककार सूत्रगत पदों का अन्वय करते हुए कहते हैं–सूत्रगत '**अपि**' शब्द (सूत्र के व्यवहित) '**कैवल्यम्**' पद के साथ अन्वित होता है। (संयम द्वारा) विवेकख्याति के परिनिष्ठित होने पर ही विवेकख्याति तथा विवेकख्यातिजन्य सर्वभावाधिष्ठातृत्व और सर्वज्ञातृत्व संज्ञक (१/४९) यथोक्त सिद्धि में परवैराग्य (**इयमपि हेयम्**–ऐसी जागृति) होने पर असम्प्रज्ञात योग के द्वारा दुःखदोष के हेतुभूत समस्त वासनाओं और कर्मों का चित्त के साथ लय हो जाता है। इस प्रकार कर्म-वासना का लय होने पर सत्त्वादि गुण के साथ पुनः संयोगाभावरूप कैवल्य भी (विवेकख्यातिजयी को) प्राप्त होता है, ऐसा सूत्रार्थ है। वैराग्य के कारण को बतलाते हुए भाष्यकार कहते हैं–'**यदेति**।' जब क्लेशक्षय और कर्मक्षयरूप कर्त्तव्य (पुरुषार्थ) के समधिगत होने पर योगी को '**एवं भवति**' इस प्रकार का विचार उत्पन्न होता है। किस प्रकार का विचार उत्पन्न होता है, उसे बतलाने के लिये भाष्यकार '**एवं**' शब्द का अर्थ करते हैं–'**सत्त्वस्येत्यादिना सत्त्वादीत्यन्तेन**।' (हेयत्वबुद्धिरूप) परवैराग्य के जागरण का कारण बतलाकर भाष्यकार '**कैवल्य**' पुरुषार्थरूप है, इसका प्रतिपादन करते हैं–'**एवमस्येत्यादिना न भुङ्क्त इत्यन्तेन**।' अर्थात् '**एवमस्य**' से लेकर '**न भुङ्क्ते**' यहाँ तक के भाष्य के द्वारा। यहाँ '**न भुङ्क्ते**' ऐसा कहने से भाष्यकार ने इस ओर स्मरण दिलाया है कि (कैवल्याख्य) पुरुषार्थ भोगाभावरूप ही है। इससे यह निकल आता है कि परोक्षरूप से दुःखाभाव (दुःख की आत्यन्तिक निवृत्ति) ही पुरुषार्थ है।

सम्प्रति, भाष्यकार सूत्र का अर्थ करते हैं–'**तदेतेषामिति**।' भाष्यगत '**तत्**' शब्द का अर्थ '**तदा**' है। पूर्वोल्लिखित '**यदा**' ( '**यदास्य...सत्त्वादिति**' इस वाक्य) के साथ इस '**तदा**' वाचक '**तत्**' शब्द का अन्वय किया जाता है। अर्थात् '**विवेकख्याति**' के प्रति जब हेयत्वबुद्धिरूप परवैराग्य जागरित हो जाता है तब परवैराग्य की अवस्था में सत्त्वादि गुणस्थानीय दुःख के हेतुभूत संस्काररूप गुणों को कार्यावस्थ मन में क्लेशादिरूप से अभिव्यक्त स्वभाव वाली '**चरितार्थता**' प्राप्त होने पर पुरुषार्थशून्य

---

1. क ग घ च छ–**परिणामं**, ख–**परिणामप्रसंगम्**।

गुणों का '**प्रतिप्रसव**' अर्थात् मन के साथ लय होने पर पुरुष को मोक्षाख्य (कैवल्याख्य) आत्यन्तिक गुणवियोग प्राप्त होता है। '**पुरुष**' को मोक्ष प्राप्त होता है– ऐसा कहने से पुरुष के परिणाम का निराकरण किया जा रहा है। अर्थात् संसारदशा में पुरुष में प्रतीत होने वाली '**अहं सुखी**, '**अहं दुःखी**' इत्याकारिका परिणामवृत्ति भी मोक्षावस्था में समाप्त हो जाती है। इसी ओर भाष्यकार इंगित करते हैं–'**तदेति**' अर्थात् मोक्षावस्था में पुरुष अपने चैतन्यात्मक रूप में स्थित रहता है॥५०॥

**योगसूत्रम्**

## स्थान्यु[1]पनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्॥५१॥

देवताओं के द्वारा सादर निमन्त्रित किये जाने पर आसक्ति और गर्व नहीं करना चाहिये, पुनः अनिष्ट प्रसङ्ग के कारण॥५१॥

**व्यासभाष्यम्**

**चत्वारः खल्वमी योगिनः–[2]प्रथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति। तत्राभ्यासी प्रवृत्त[3]मात्रज्योतिः प्रथमः। [4]ऋतम्भरप्रज्ञो द्वितीयः। भूतेन्द्रियजयी तृतीयः सर्वेषु भावितेषु [5]भावनीयेषु कृतरक्षाबन्धः [6]कृतकर्तव्यसाधनादिमान्। चतुर्थो यस्त्वतिक्रान्तभावनीयः। तस्य चित्तप्रति[7]सर्ग एकोऽर्थः। सप्तविधा[8]स्य प्रान्तभूमिप्रज्ञा। तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्व[9]विशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते–भो इहास्यताम्, इह रम्यताम्, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं [10]जरामृत्यू बाधते**

---

1. **उपमन्त्रणे, मन्त्रणे**–इति पाठान्तरे।
2. क ख ग घ च ज झ त थ ध प फ भ म य र–**प्रथम०**, छ द न ब–**प्राथम०**।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**मात्र०** उपलभ्यते, ब–**मात्र०** नोपलभ्यते।
4. क ख ग घ च ज झ त थ द ध न प फ ब भ म य र–**ऋतम्भर०**, छ–**प्रातिभ०**।
5. क ख ग घ च छ ज झ त थ द ध न प फ ब भ य र–**भावनीयेषु** उपलभ्यते, म–**भावनीयेषु** नोपलभ्यते।
6. क ग घ छ प फ म य र–**कृतकर्तव्यसाधनादिमान्**, ख च ज झ त थ द ध भ–**कर्तव्यसाधनादिमान्ः**, न–**कृतकर्तव्यःसाधनादिमान्**, ब–**कर्तव्यतासाधनवान्**।
7. ब–**एव** (**सर्गः**–पश्चात्) उपलभ्यते, क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**एव** नोपलभ्यते।
8. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**अस्य**, ब–**तस्य**।
9. क ग च छ ज झ त थ द ध न ब भ म–**विशुद्धिं**, ख घ प फ य र–**शुद्धिम्**।
10. क ख ग घ छ ज झ त थ द ध न प फ ब र–**जरामृत्युं**, च भ म य–**जरामृत्यू**।

**वैहायसमिदं यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी, वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यताम् इदमक्षयमजरम[1]मरस्थानं देवानां प्रियमिति। एवमभिधीयमानः सङ्गदोषान्भावयेत्–घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशी योगप्रदीपः। तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः। स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया [2]वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामिति। स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः समाधिं भावयेत्। [3]सङ्गमकृत्वा स्मयमपि न कुर्यात्–एवमहं देवानामपि प्रार्थनीय इति। स्मयादयं सुस्थितंमन्यतया मृत्युना केशेषु गृहीतमिवात्मानं [4]न भावयिष्यति। तथा चास्य च्छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्य[5]प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति। ततः पुनरनिष्टप्रसङ्गः। एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढी भविष्यति। भावनीयश्चार्थोऽभिमुखीभविष्यति॥५१॥**

योगी चार प्रकार के होते हैं–प्रथमकल्पिक, मधुभूमिक, प्रज्ञाज्योति और अतिक्रान्तभवनीय। इनमें से 'प्रथमकल्पिक' (संज्ञक) अभ्यासी (योगी)वह है, जो अभी ज्ञानरूप ज्योति की ओर प्रवृत्त मात्र हुआ है। ऋतम्भरा-प्रज्ञावान् योगी द्वितीय (मधुभूमिक कहलाता) है। भूतेन्द्रियजय से सम्पन्न योगी तृतीय (प्रज्ञाज्याति कहलाता) है, जो समस्त साक्षात्कृत (परचित्तादिज्ञान) तथा साक्षात्करणीय (विशोकादि) विषयों में अच्युत (विषयों से प्रभावित न) रहने के लिये प्रबन्ध किये हुए और विहित साधनानुष्ठानादि से युक्त होता है। 'अतिक्रान्तभवनीय' नामक जो चौथा योगी है, उसके लिये चित्तविलय ही एकमात्र प्रयोजन (रह जाता) है। चतुर्थ योगी की सात प्रान्त रूपों वाली प्रज्ञा होती है। उन चार प्रकार के योगियों में मधुमती भूमि का साक्षात्कार कर लेने वाले योगी को स्वर्गादि लोकों के स्वामी देवता लोग उनकी बुद्धि-शुद्धि का परीक्षण करते हुए इस प्रकार निमन्त्रित करते हैं–हे योगी! यहाँ विराजिये! यहाँ रमण कीजिये! यह भोग अत्यन्त मनोहर है। यह तरुणी

---

1. क ख ग घ च ज झ त द ध प फ ब भ म य र–**अमर०**, छ थ न–**अमरम्**।
2. क ग घ च छ ज झ त थ द ध न प फ ब भ म य र–**वञ्चितस्तस्य**, ख–**वञ्चितस्यैव**।
3. क ख ग घ च छ ज त थ द ध न प फ ब भ म य र–**सङ्गमकृत्वा**, झ–**सङ्गमं कृत्वा**।
4. क ख ग घ च ज झ त द ध न प फ ब भ म य र–**न भावयिष्यति**, छ थ–**भावयति**।
5. क ख ग घ च छ झ त थ द ध न प फ ब भ म य र–**प्रमादो लब्धविवरः क्लेशान्**, ज–**प्रमादोपलब्धविवरः क्लेशात्**।

अत्यन्त आकर्षक है। यह रसायन वार्धक्य और मरण को दूर रखता है। यह आकाशगामी विमान है। ये सब कल्पवृक्ष हैं। यह अत्यन्त पवित्र आकाश-गंगा है। ये सिद्ध लोग तथा महर्षिगण हैं। उत्तम तथा सब प्रकार से अनुकूल रहने वाली ये अप्सराएँ हैं। यहाँ रहने वाले के दिव्य कान तथा दिव्य नेत्र हो जाते हैं। शरीर वज्र के समान बलिष्ठ बन जाता है। आयुष्मन्! आपने अपनी तपस्या के गुणों से यह सब उपार्जित किया है। देवों को प्रिय लगने वाले अक्षय, अजर एवं अमर इस स्थान को आप स्वीकार करें। इस प्रकार देवों के कहने पर भोगों की आसक्ति के विषय में योगी दोषों की उद्भावना करे– 'भयंकर संसाररूपी अंगारों के मध्य भुनने वाले तथा जन्म-मरणरूपी अन्धकार में बार-बार भ्रमण करने वाले मुझसे किसी प्रकार अविद्यादि क्लेशान्धकार को मिटाने वाला योगरूपी दीपक प्राप्त किया गया है। तृष्णा से उत्पन्न होने वाले ये विषयरूपी वायु उस योगरूपी दीपक के विरोधी हैं। इतने दुःखों को भोगने वाला वही मैं योगज्ञानरूप प्रकाश को प्राप्त कर कैसे इस भोगरूपी मृगतृष्णा से ठगा जाकर फिर उस धधकती हुई संसाररूपी अग्नि में अपने आप को इन्धन बना डालूँ? आप लोगों का कल्याण हो। आपके स्वप्नतुल्य तथा अतितुच्छ पुरुषों के द्वारा प्रार्थनीय इन भोगों को नमस्कार है'–इस प्रकार अविचल मति वाला योगी समाधि की भावना करे। इस प्रकार भोगों के विषय में आसक्ति न करते हुए ऐसा सोच करके अभिमान भी न करे कि मैं तो इस प्रकार से देवताओं का भी प्रार्थनीय हो गया हूँ।' गर्व के कारण योगी अपने को सुस्थिर मानने के कारण अपने को मृत्यु के द्वारा पकड़े हुए बालों वाला न समझेगा। ऐसी अवस्था में इस योगी की कमजोरी का अन्वेषण करने वाला, निरन्तर महान् यत्न करने पर निवृत्त होने वाला प्रमाद लब्धावसर होकर (अविद्यादि समस्त) क्लेशों को आधार प्रदान करेगा। जिससे फिर अनभीष्ट (संसार-चक्र) की प्रसक्ति होगी। इस प्रकार आसक्ति और गर्व न करने वाले योगी के द्वारा साक्षात्कृत पदार्थ सुदृढ़ हो जायेगा और साक्षात्करणीय पदार्थ सामने आयेगा॥५१॥

### तत्त्ववैशारदी

**संप्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसंभवे तन्निराकरणकारणमुपदिशति–स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसंगात्। स्थानानि येषां सन्ति ते स्थानिनो महेन्द्रादयः। तैरु[1]पनिमन्त्रणं तस्मिन्सङ्गश्च स्मयश्च [2]न कर्तव्यः, पुनरनिष्टप्रसङ्गात्। तत्र यं**

1. क ख ग ज झ त–उपमन्त्रणं, घ च छ थ द ध न–उपनिमन्त्रणम्।
2. क ख ग घ च छ ज त थ द ध न–न कर्तव्यः, झ–तयोरकरणमुपदिशति।

**देवाः स्थानैरु[1]पमन्त्रयन्ते तं योगिनमेकं निर्धारयितुं यावन्तो योगिनः संभवन्ति तावत एवाह—चत्वार इति। तत्र प्रथमकल्पिकस्य स्वरूपमाह—तत्राभ्यासीति। प्रवृत्तमात्रं न पुनर्वशीकृतं ज्योतिर्ज्ञानं परचित्तादिविषयं यस्य स तथा। द्वितीयमाह—ऋतम्भरप्रज्ञ इति। यत्रेदमुक्तम्—ऋतम्भरा तत्र प्रज्ञा इति। स हि भूतेन्द्रियाणि जिगीषुः। तृतीयमाह—भूतेन्द्रियजयीति। तेन हि स्थूलादिसंयमेन ग्रहणादिसंयमेन च भूतेन्द्रियाणि जितानि। तमेवाह—[2]सर्वेष्विति। सर्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात्परचित्तादिज्ञानादिषु कृतरक्षाबन्धो यतस्तेभ्यो न च्यवते भावनीयेषु निष्पादनीयेषु विशोकादिषु परवैराग्यपर्यन्तेषु कर्तव्यसाधनवान्, पुरुषप्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादकत्वात्। चतुर्थमाह—चतुर्थ इति। तस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्त[3]प्रतिसर्ग एकोऽर्थः।**

**तदेतेषु योगिषूपनिमन्त्रणविषयं योगिनमवधारयति—तत्र मधुमतीमिति। प्रथमकल्पिके तावन्महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति। तृतीयोऽपि तैर्नोपनिमन्त्रणीयः, भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः। [4]चतुर्थेऽपि परवैराग्यसंपत्तेरासङ्ग[5]शङ्का दूरोत्सारितैवेति पारिशेष्याद् [6]द्वितीय एव ऋतम्भरप्रज्ञस्तदुपनिमन्त्रणविषय इति। वैहायसमाकाशगामि। अक्षयमविनाशि। अजरं सदाभिनवम्। स्मयकरणे दोषमाह—स्मयादयमिति। स्मयात्सुस्थितंमन्यो नानित्यतां भावयिष्यति, न तस्यां प्रणिधास्यतीत्यर्थः। सुगममन्यत्॥५१॥**

सम्प्रति, कैवल्य-साधन में प्रवृत्त योगियों को जो विघ्न उपस्थित होते हैं, उनके निराकरण हेतु सूत्रकार उपदेश करते हैं—'**स्थानीति**।' जिनके स्वर्गलोकादि स्थान हैं, वे '**स्थानी**' कहलाते हैं और ये '**स्थानी**' महेन्द्रादि हैं। उनके द्वारा स्वर्गलोक में ले जाने के लिये प्रार्थना करने पर साधक को उसमें आसक्ति और गर्व नहीं करना चाहिये। (संग और स्मय न करने का हेतु यह है)—अन्यथा जन्म, मरणादि दुःखरूप अनिष्टप्राप्ति होना सम्भव रहता है। जिन योगियों को देवता लोग निमन्त्रित करते हैं, उनके स्वरूप का निर्धारण करने के लिये जितने प्रकार के योगी हो सकते हैं, उन सभी के बारे में भाष्यकार बतलाते हैं—'**चत्वार इति**।' योगी चार प्रकार के होते हैं—प्रथमकल्पिक, मधुभूमिक, प्रज्ञाज्योति तथा अतिक्रान्तभावनीय। उनमें से प्रथमकल्पिक योगी के स्वरूप को भाष्यकार बतलाते हैं—'**तत्राऽभ्यासीति**।' जिसको पर-

---

1. क ख ग घ च छ ज झ त थ ध न—**उपमन्त्रयन्ते**, द—**उपनिमन्त्रयन्ते**।
2. थ द ध—**सर्वेष्विति** उपलभ्यते, क ख ग घ च छ ज झ त न—**सर्वेष्विति** नोपलभ्यते।
3. क ख ग घ च छ झ त थ द ध न—**प्रतिसर्ग०**, ज—**सर्ग०**।
4. क ज—**चतुर्थः**, ख ग घ च छ झ त थ द ध न—**चतुर्थे**।
5. क ख ग घ च छ ज झ त न—**शंका**, थ द ध—**आशंका**।
6. क—**द्वितीय एव निमन्त्रणीयः**, ख ग घ च ज झ त थ द ध न—**द्वितीय एव**, छ—**द्वितीय एव नियन्त्रणीयः**।

चित्तादिविषयक ज्योति अर्थात् ज्ञान प्राप्त नहीं हुआ है, परन्तु ज्ञान को प्राप्त करने के लिये जो प्रयत्नशील रहता है, वह '**प्रथमकल्पिक**' योगी कहा जाता है। भाष्यकार द्वितीय '**मधुभूमिक**' योगी का स्वरूप बतलाते हैं–'**ऋतम्भरप्रज्ञ इति**।' जिसे समाधि द्वारा ऋतम्भरा प्रज्ञा प्राप्त है वह द्वितीय '**मधुभूमिक**' योगी कहा जाता है। यह भूतेन्द्रियों पर विजय प्राप्त करने की इच्छा रखता है। भाष्यकार तृतीय '**प्रज्ञाज्योति**' योगी का स्वरूप बतलाते हैं–'**भूतेन्द्रियजयीति**।' तृतीय योगी भूतों के स्थूलादिविषयक संयम द्वारा और इन्द्रियों के ग्रहणादिविषयक संयम द्वारा भूतेन्द्रियों पर विजय प्राप्त करता है। इसी तथ्य को भाष्यकार बतलाते हैं–'**सर्वेष्विति**।' उक्त भूतेन्द्रिय के जय से निष्पादित सर्वपरचित्तादि में कर्तव्यहीन हो जाता है, क्योंकि प्राप्त ऐश्वर्यों से अब उसकी प्रच्युति नहीं होती है और वह विशोकादि से लेकर परवैराग्यपर्यन्त निष्पादनीय सिद्धियों के लिये प्रयत्नशील रहता है। क्योंकि साधनविषयक पुरुष का प्रयत्न ही साध्य को निष्पन्न करता है। चतुर्थ '**अतिक्रान्तभवनीय**' योगी के बारे में भाष्यकार बतलाते हैं–'**चतुर्थ इति**।' जो '**अतिक्रान्तभावनीय**' चतुर्थ योगी है, उसका केवल असम्प्रज्ञात समाधि द्वारा '**चित्तप्रतिसर्ग**' अर्थात् चित्तविलय करना ही एक प्रयोजन अवशिष्ट रहता है। अन्य कोई कर्तव्य शेष नहीं रहता है।

इन चार प्रकार के योगियों में से जिस योगी को देवता लोग उपनिमन्त्रित करते हैं, उसे भाष्यकार बतलाते हैं–'**तत्र मधुमतीमिति**।' जो '**प्रथमकल्पिक**' योगी है, उसको तो महेन्द्रादिकृत प्रार्थना की शंका ही नहीं रहती है। (क्योंकि अभी वह योगाभ्यास में प्रवृत्तमात्र होता है)। और जो तृतीय प्रकार का '**प्रज्ञाज्योति**' योगी होता है, वह देवतागण के प्रलोभन में आ ही नहीं सकता है (क्योंकि भूतेन्द्रियजयी होने से अणिमादि ऐश्वर्य उसे स्वतः प्राप्त रहते हैं)। और जो चतुर्थ प्रकार का '**अतिक्रान्तभावनीय**' योगी होता है, वह भी प्रलोभन में नहीं आ सकता है। (क्योंकि परवैराग्यसम्पन्न होने से उसकी स्वर्गीय भोग में स्पृहा ही नहीं होती है। अतः परिशेषात् द्वितीय ऋतम्भरप्रज्ञ '**मधुभूमिक**' योगी ही प्रलोभन का विषय होता है। देवगण किस प्रकार प्रलुब्धकारी वचनों द्वारा '**प्रज्ञाज्योति**' योगी को निमन्त्रित करते हैं, यह भाष्य में द्रष्टव्य है। तत्त्ववैशारदीकार निमन्त्रण-वाक्यों के दो-चार शब्दों का अर्थ बतलाते हैं–'**वैहायस**' शब्द का अर्थ है–आकाशगामी। '**अक्षय**' शब्द का अर्थ है–अविनाशी (नित्य) तथा '**अजर**' शब्द का अर्थ है–सदा युवा रहना। भाष्यकार अभिमान करने में दोष बतलाते हैं–'**स्मयादयमिति**।' वाह! मैं देवताओं द्वारा पूजा किया जा रहा हूँ, इस प्रकार अभिमान करने से अपने को कृतकृत्य मानता हुआ योगी स्वर्गादि पदार्थों में अनित्यत्वचिन्तन नहीं कर सकेगा। जिससे समाधि भी उसे प्राप्त न हो सकेगी। शेष भाष्य सुगम है॥५१॥

बालप्रिया–

**तैरुपनिमन्त्रणम्**'–इन्द्रादि देवताओं द्वारा स्वर्गादि लोक में ले जाने के लिये योगियों के प्रति की जाने वाली प्रार्थना 'उपनिमन्त्रण' पद का भावार्थ है।

'**तस्य चित्तप्रतिसर्ग एकोऽर्थः**'–सम्प्रज्ञातसमाधिनिष्ठ योगी के लिये असम्प्रज्ञात समाधि द्वारा चित्त का विलय करने की एक ही कर्त्तव्यता शेष रह जाती है, यह इस वाक्यार्थ का भावार्थ है। जिज्ञासा है कि ऐसा क्यों? द्वितीय पाद के '**परिज्ञातं हेयं नाऽस्य पुनः परिज्ञेयम्**' वाक्य द्वारा इसका उत्तर दिया जा चुका है। योगी द्वारा सप्तविध प्रान्तभूमिप्रज्ञा निष्पादित हो गई रहती है। अतः उसके लिये कुछ भी करणीय शेष नहीं रहता है।

'**स्थानैरुपनिमन्त्रयन्ते**'–यहाँ '**स्थान**' शब्द से स्वर्गस्थानीय विमान, अप्सरा, कल्पद्रुमादि दिव्य वस्तुएँ उपलक्षित हैं। इस प्रकार प्रलुब्धकारी वस्तुओं के द्वारा देवगण योगी को ललचाते हैं॥५१॥

## योगवार्त्तिकम्

**कैवल्याख्यसिद्ध्यर्थिनो योगिनो यथोक्तवैराग्यवदेव साधनान्तरमाह, [1]अथ वा सम्प्रति कैवल्यप्रसङ्गतः कैवल्यसाधने प्रवृत्तस्य योगिनस्तत्प्रत्यूहसम्भवे तन्निराकरणप्रकारमाह–स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्। स्थानिनः स्वर्गादिलोकाधिकारिणो देवा इन्द्रादयः, तेषां [2]स्वर्लोके नयनाय योगिनो निमन्त्रणे सति तत्र सङ्ग[3]स्मयाकरणमुपायः। सङ्गे स्मये च का क्षतिस्तत्राह–पुनरनिष्टप्रसङ्गादिति। सङ्गस्मयाभ्यां पुनरपि संसारप्रसङ्गात्। सङ्गः [4]प्रीतिः, स्मयश्च देवानां प्रार्थनेनात्मनि कृतार्थताऽभिमान इत्यर्थः। तत्र यस्यां भूमिकायां स्थान्युपनिमन्त्रणं भवति तां वक्तुं योगिनां भूमिकाचतुष्टयमाह–चत्वार इति। प्रथमकल्पिकस्य स्वरूपमाह–तत्राभ्यासीति। प्रवृत्तमात्रं न तु निष्पन्नं ज्योतिर्ज्ञानं यस्य स तथा, सवितर्कादिरूपापरप्रत्यक्षवान् न तु ऋतम्भरप्रज्ञ इत्यर्थः। मधुभूमिकस्य स्वरूपमाह–ऋतम्भरेति। ऋतं सत्यमेव बिभर्त्तीति व्युत्पत्त्या परप्रत्यक्षमेव ऋतम्भरा प्रज्ञाऽत्र विवक्षिताः, सा च परिशेषात् निर्वितर्करूपा भूमिकैव, तदुत्तरभूमिकानां तृतीयादावेवान्तर्भावादिति। प्रज्ञाज्योतिषः स्वरूपमाह–भूतेति। ऋतम्भरप्रज्ञातोऽस्य विशेषमाह–सर्वेष्विति। सर्वेषु भावितेषूत्पादितेषु निर्वितर्कादियोगेषु कृतो रक्षारूपो बन्धो येन स तथा, तथा भावनीयेषूत्पादनीयेषु विशोकादिसिद्ध्यादिष्वसम्प्रज्ञातपर्यन्तेषु विहितसाधनवानित्यर्थः। अतिक्रान्तभावनीयस्य स्वरूपमाह–**

---

1. क ग घ च छ–अथवा सम्प्रति कैवल्यप्रसङ्गतः कैवल्यसाधने प्रवृत्तस्य योगिनस्तत्प्रत्यूहसम्भवे तन्निराकरणप्रकारमाह उपलभ्यते, ख–अथवा...आह नोपलभ्यते।
2. क ग च छ–स्वर्लोके, ख–स्वर्गादिलोके, घ–स्वर्गलोके।
3. क ग च छ–स्मय०, ख घ–स्मययोः।
4. क ग घ च छ–प्रीतिः, ख–प्रतीतिः।

**चतुर्थ इति। चित्तप्रतिसर्गोऽसम्प्रज्ञातसमाधिना चित्तविलयमात्रं कर्त्तव्यमवशिष्यत इत्यर्थः। प्रज्ञाज्योतिषोऽस्य विशेषमाह–सप्तविधेति। प्रज्ञा जातेति शेषः।**

सूत्रकार कैवल्याख्य सिद्धि के इच्छुक योगी के लिये पूर्वोल्लिखित परवैराग्य साधन की ही भाँति एक अन्य साधन को बतलाते हैं। अथवा ऐसा भी कहा जा सकता है कि सम्प्रति, सूत्रकार कैवल्य का प्रसंग प्राप्त होने से उन विघ्नों के निराकरण की बात करते हैं जो कैवल्य-प्राप्ति का प्रयास करते समय उपस्थित होते हैं–'**स्थानीति**।' वार्त्तिककार सूत्रार्थ करते हैं–स्वर्गादि लोक के पदाधिकारी इन्द्रादि देवताओं को '**स्थानी**' कहते हैं। स्वर्गलोक में ले जाने के लिये इन्द्रादि देवों का 'निमंत्रण' योगी (मोक्षार्थी) को प्राप्त होने पर उस (निमंत्रण) के प्रति '**सङ्ग**' अर्थात् आसक्ति और '**स्मय**' अर्थात् अभिमान न करना (कैवल्यसिद्धि का अपर) उपाय है। **शङ्का**–देवों द्वारा उपनिमन्त्रित किये जाने पर यदि योगी सङ्ग और स्मय करता है, तो इसमें हानि क्या है?

**समाधान**–इस पर सूत्रकार कहते हैं–'**पुनरनिष्टप्रसङ्गादिति**।' (पूर्वोल्लिखित निमंत्रण के प्रति) मोक्षार्थी द्वारा सङ्ग और स्मय किये जाने से पुनः संसारापत्ति होगी अर्थात् संसार-प्राप्ति का प्रसङ्ग आयेगा। '**सङ्ग**' शब्द का अर्थ है–प्रीति (चाह) तथा '**स्मय**' शब्द का अर्थ है–देवों द्वारा प्रार्थना किये जाने से अपने में कृतकृत्यता का अभिमान करना। इस प्रकार सूत्र का अर्थ किया जाता है।

योग की जिस अवस्था में योगियों को देवों का निमन्त्रण प्राप्त होता है, उस अवस्था को बतलाने के लिये भाष्यकार योगियों की चार अवस्थाओं का प्रतिपादन करते हैं–'**चत्वार इति**।' भाष्यकार योगी की '**प्रथमकल्पिक**' अवस्था (भूमिका) को बतलाते हैं–'**तत्राभ्यासीति**।' वार्त्तिककार '**प्रवृत्तमात्रज्योतिः**' पद का (बहुब्रीहिसमास परक) विग्रह करते हैं–'**प्रवृत्तमात्रं न तु निष्पन्नं ज्योतिर्ज्ञानं यस्य स प्रवृत्तमात्रज्योतिः**' अर्थात् जिसे ज्ञान निष्पन्न नहीं हुआ है, ऐसा प्रवृत्तमात्रज्योति वाला योगी '**प्रथम-कल्पिक**' कहलाता है। अर्थात् सवितर्कादिरूप अपरप्रत्यक्ष वाले योगी को '**प्रथमकल्पिक**' कहते हैं, न कि ऋतम्भरप्रज्ञयोगी को '**प्रथमकल्पिक**' कहते हैं। भाष्यकार योगी की '**मधुभूमिक**' अवस्था (भूमिका) को बतलाते हैं–'**ऋतम्भरेति**।' '**ऋतं सत्यमेव बिभर्त्तीति ऋतम्भरा**' अर्थात् जो सत्य को धारण करती है–इस व्युत्पत्ति के अनुसार यहाँ पर-प्रत्यक्ष को ही ऋतम्भरा प्रज्ञा कहना अभिप्रेत है और यह ऋतम्भरा प्रज्ञा परिशेषा-नुमान से निर्वितर्करूपा भूमिका (निर्वितर्का समापत्ति) ही है, क्योंकि '**मधुभूमिक**' भूमिका के उत्तरवर्ती '**प्रज्ञाज्योति**' भूमिका वाले योगियों का सविचारादि संज्ञक तृतीयादि भूमिकाओं में ही अन्तर्भाव होता है। भाष्यकार योगी की '**प्रज्ञाज्योति**' अवस्था (भूमिका) का स्वरूप बतलाते हैं–'**भूतेति**।' ऋतम्भरप्रज्ञ मधुभूमिक योगी से

प्रज्ञाज्योतिमान् योगी के वैशिष्ट्य (अन्तर) को भाष्यकार बतलाते हैं–'**सर्वेष्विति**।' जो निर्वितर्कादि सभी निष्पादित योगों में '**कृतरक्षाबन्ध**' अर्थात् च्युतरहित सुदृढ़ स्थिति वाला होता है अर्थात् दृढाभ्यास के कारण निष्पादित निर्वितर्कादि योगों से कभी स्खलित नहीं होता है तथा निष्पादनीय (भावनीय, उत्पादनीय) असम्प्रज्ञात-पर्यन्त विशोकादि सिद्धियों में साधनरत रहता है अर्थात् विशोकादि सिद्धियों के प्राप्त्यर्थ अभ्यासरत रहता है, उसे '**प्रज्ञाज्योति**' योगी कहते हैं। भाष्यकार '**अतिक्रान्त-भवनीय**' भूमिका वाले योगी का स्वरूप बतलाते हैं–'**चतुर्थ इति**।' असम्प्रज्ञात समाधि के द्वारा '**चित्तप्रतिसर्ग**' अर्थात् चित्त का विलयमात्र करना जिसके लिये शेष रह जाता है, उसे '**अतिक्रान्तभवनीय**' योगी कहते हैं। '**प्रज्ञाज्योति**' योगी से '**अतिक्रान्त-भवनीय**' योगी का अन्तर (वैशिष्ट्य) बतलाते हुए भाष्यकार कहते हैं–'**सप्तविधेति**।' 'उत्पन्न होती हैं'–ऐसा वाक्यशेष है। अर्थात् चतुर्थ योगी को उक्त सात प्रकार की प्रज्ञाएँ उत्पन्न होती हैं।

सम्प्रति, उपनिमन्त्रणीय भूमिका को विश्लेषित किया जा रहा है–

**योगवार्त्तिकम्**

**उक्तासु योगभूमिषु स्थान्युपनिमन्त्रणस्य भूमिमवधारयति–तत्रेति। प्रथमभूमिकायां तावन्महेन्द्रादीनामेतादृशानुग्रह एव न भवति, तृतीयचतुर्थभूमिकयोस्तु देवादय उपेक्षणीया एव भवन्ति, अतो मधुभूमिकायां द्वितीयायामेव निमन्त्रणं भवतीत्याशयः। साक्षात्कुर्वतः= स्वस्येयं मधुमती भूमिका जातेत्यनुभवतः। अनेन भूमिनिष्पत्तिरुक्ता। निष्पन्नमधुभूमिकस्येत्यर्थः। उपनिमन्त्रणप्रकारमाह–भो इहेत्यादिना देवानां प्रियमित्यन्तेन। सङ्गस्मयाकरणं व्याचष्टे–एवमभिधीयमान इति। सङ्गदोषान् विषय[1]प्रीतिजान्। दोषचिन्तनप्रकारमाह–घोरेष्वित्या-दिना कुर्यामित्यन्तेन। सङ्गं त्यक्त्वा यत् कर्त्तव्यं तदाह–स्वस्तीत्यादिना। भावयेत् कुर्यात्। स्मयं विवृण्वानस्तत्कारणदोषमाह–एवमहमिति। न भावयिष्यति [2]न चिन्तयिष्यति। यत्नोपचर्यः= यत्नप्रतीकार्यः। सङ्गस्मयाकरणस्य फलमाह–एवमस्येति॥५१॥**

उपरिनिर्दिष्ट योग की चार भूमिकाओं में से स्वर्गादि लोक के अधिकारी इन्द्रादि देवों (स्थानी) द्वारा उपनिमन्त्रण के योग्य योगभूमि का निर्धारण भाष्यकार करते हैं–'**तत्रेति**'। प्रथम भूमिका ('**प्रथमकल्पिक**' अवस्था) वाले योगियों को महेन्द्रादि देवता लोग उक्त प्रकार का निमन्त्रण ही नहीं देते हैं और तृतीय '**प्रज्ञाज्योति**' तथा चतुर्थ '**अतिक्रान्तभवनीय**' भूमिका वाले दोनों प्रकार के योगियों की तो देवादि लोग उपेक्षा ही करते हैं। अतः द्वितीय '**मधुभूमिक**' योगियों को ही देवताओं का उप-

---

1. क ख ग–**प्रीतिजान् दोषान्**, घ च–**प्रीतिजान्**, छ–**प्रीतिज्ञान्**।
2. क ग घ च छ–**न चिन्तयिष्यति** उपलभ्यते, ख–**न चिन्तयिष्यति** नोपलभ्यते।

निमन्त्रण प्राप्त होता है, ऐसा भाष्यकार के कथन का अभिप्राय है। '**साक्षात्कुर्वतः**' पद का अर्थ है–यह '**मधुमती**' भूमि मुझे प्राप्त हो गई है, ऐसा जिसने अनुभव कर लियां है। इस प्रकार भाष्यकार ने '**साक्षात्कुर्वतः**' पद के द्वारा भूमि-निष्पत्ति का अभिधान किया है। अर्थात् लब्धमधुभूमिक योगी को ही देवताओं का निमंत्रण प्राप्त होता है। '**उपनिमन्त्रण**' का स्वरूप बतलाया जा रहा है–'**भो इहेत्यादिना देवानां प्रियमित्यन्तेन**।' भाष्यकार '**सङ्ग**' तथा '**स्मय**' की अकरणीयता का प्रतिपादन करते हैं–'**एवमभिधीयमानं इति**।' '**सङ्गदोष**' अर्थात् योगी भौतिक विषयों के प्रति होने वाली प्रीत्यात्मक बुद्धि (चाह) का मूल्यांकन करे। वैषयिक प्रीति के प्रति की जाने वाली दोषबुद्धि का प्रकार भाष्यकार बतलाते हैं–'**घोरेष्वित्यादिना कुर्यामित्यन्तेन**।' सुख-साधनों के प्रति चाह (प्रीति, संग) का परित्याग कर योगी को जो करना चाहिये, उसे भाष्यकार बतलाते हैं–'**स्वस्तीत्यादिना**।' '**भावयेत्**' पद का अर्थ है–करे। '**स्मय**' के स्वरूप का वर्णन करते हुए भाष्यकार '**स्मय**' के कारण उद्भावित दोषों का विश्लेषण करते हैं–'**एवमहमिति**।' '**न भावयिष्यति**' पद का अर्थ है–'**न चिन्तयिष्यति**' अर्थात् चिन्तन नहीं करेगा। '**यत्नोपचर्य**' पद का अर्थ है–'**यत्नप्रतीकार्य**' अर्थात् प्रयत्न द्वारा दूर की जा सकने वाली। भाष्यकार सङ्ग और स्मय न करने के फल को बतलाते हैं–'**एवमस्येति**।' इसका अर्थ पीछे द्रष्टव्य है॥५१॥

### योगसूत्रम्

## क्षणतत्क्रमयोः [1]संयमा[2]द्विवेकजं ज्ञानम्॥५२॥

'क्षण' और उसके 'क्रम' में संयम करने से विवेकज ज्ञान उत्पन्न होता है॥५२॥

### व्यासभाष्यम्

**यथापकर्षपर्यन्तं द्रव्यं परमाणुरेवं [3]परमापकर्षपर्यन्तः कालः क्षणः। यावता वा समयेन [4]चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसंपद्येत स कालः क्षणः। [5]तत्प्रवाहाविच्छेदस्तु क्रमः। क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धि[6]समा-**

---

1. **सम्बन्ध०**–(**संयमात्–प्राक्**) उपलभ्यते।
2. **विवेकजज्ञानं, विवेकज्ञानम्**–इति पाठान्तरे।
3. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**परमापकर्ष०**, ब–**अपकर्ष०**।
4. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**चलितः**, ब–**विचलितः**।
5. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**तत्प्रवाहाविच्छेदस्तु क्रमः**, ब–**तस्य प्रवाहाविच्छेदभाविनः**।
6. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र–**समाहारः**, ब–**समाहारात्**।

**हारो मुहूर्ताहोरात्रादयः। स खल्वयं कालो वस्तुशून्यो**ऽ[1]**पि बुद्धिनिर्माणः शब्द**[2]**ज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवा**[3]**वभासते। क्षणस्तु वस्तु**[4]**पतितः** [5]**क्रमावलम्बी। क्रमश्च क्षणानन्तर्यात्मा। तं कालविदः काल इत्याचक्षते योगिनः। न च द्वौ क्षणौ सह भवतः, क्रमश्च न द्वयोः सहभुवोः, असंभवात्, पूर्वस्मादु**[6]**त्तरस्य भाविनो यदानन्तर्यं क्षणस्य स क्रमः। तस्माद्वर्तमान** [7]**एवैकः क्षणो न** [8]**पूर्वोत्तरक्षणाः सन्तीति। तस्मान्नास्ति तत्समाहारः। ये तु भूतभाविनः क्षणास्ते परिणामा**[9]**न्विता व्याख्येयाः। तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति। तत्क्षणोपारूढाः खल्वमी** [10]**सर्वे धर्माः। तयोः क्षणतत्क्रमयोः संयमात्तयोः साक्षात्करणम्। ततश्च विवेकजं ज्ञानं प्रादुर्भवति॥५२॥**

जैसे परमसूक्ष्मता की सीमा तक पहुँचा हुआ द्रव्य 'परमाणु' कहा जाता है, वैसे ही अत्यन्त सूक्ष्मता तक पहुँचा हुआ काल 'क्षण' कहा जाता है। अथवा एक परमाणु अपने स्थान से चलकर, 'पूर्वदेश' अर्थात् परमाणुमात्र परिमित स्थान को लांघकर, दूसरे स्थान पर जितने समय में पहुँचता है, उतना समय 'क्षण' कहा जाता है। इस प्रकार के क्षण की धारा का न टूटना ही तो उसका 'क्रम' कहा जाता है। क्षण और उसके क्रम का वस्तुरूप से समाहार (संग्रह) नहीं होता है। अतः मुहूर्त, अहोरात्र आदि बुद्धि द्वारा कल्पित समाहार ही होता है (अर्थात् वह वास्तविक नहीं होता है)। यह पूर्ववर्णित मुहूर्तादि काल वस्तुशून्य तथा बुद्धिकल्पित होने पर भी शब्द-ज्ञानानुपाती होने से चञ्चलमतिमान् लौकिक व्यक्तियों को वास्तविक सदृश प्रतीत होता है, किन्तु क्षण (काल्पनिक नहीं) वास्तविक (वस्तुकोटि में प्रविष्ट होता) है, अतः वह क्रम का आश्रय है और क्रम तो क्षणों का

---

1. क ख ग च छ ज थ ध न म—**अपि** उपलभ्यते, घ झ त द प फ ब भ य र—**अपि** नोपलभ्यते।
2. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**ज्ञान०**, ब—**धर्म०**।
3. द—**क्षणस्तु स्वरूप इव अवभासते** ( **अवभासते**—पश्चात्) उपलभ्यते, क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र—**क्षणस्तु...भासते** नोपलभ्यते।
4. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**पतितः**, ब—**रूपः**।
5. क ख ग घ च छ ज थ द ध न प फ ब भ म य र—**क्रमावलम्बी**, झ त—**क्रमाद्बलवान्**।
6. क ख ग च छ ज झ त थ द ध न ब भ म य—**उत्तरस्य**, घ प फ र—**उत्तर०**।
7. क घ च छ ज झ त थ द ध न प फ ब भ म य र—**एवैकः**, ख—**चैकः**, ग—**एकैव**।
8. क ख ग घ च छ ज थ द ध न प फ ब भ म य र—**पूर्वोत्तर०**, झ त—**पूर्वे**।
9. क ख ग घ च छ ज झ त थ द ध न प फ भ म य र—**अन्विता**, ब—**अस्तिता**।
10. क ख ग च छ ज झ त थ द ध न ब भ म—**सर्वे** उपलभ्यते, घ प फ य र—**सर्वे** नोपलभ्यते।

आनन्तर्यरूप है। उस क्षण को कालज्ञ योगिजन 'काल' कहते हैं। दो क्षण एक साथ नहीं रहते हैं, क्योंकि दो क्षणों की एक साथ स्थिति संभव नहीं है। इसलिये पहले वाले (क्षण)से बाद वाले (क्षण) का जो आनन्तर्य है, वही क्षण का क्रम है। अतः वर्तमान अवस्था वाला ही एक (वास्तविक) क्षण होता है, पूर्व अथवा उत्तरकालिक क्षण वर्तमान नहीं होते हैं अर्थात् वे विद्यमान नहीं रहते हैं। इसलिये क्षण और उनके क्रम में समाहाररूप मिलन भी नहीं होता है और जो वर्तमानातिरिक्त भूत तथा भावी क्षण हैं, वे परिणामरूप से वर्तमान क्षण में अन्वित रहते हैं–ऐसी व्याख्या कर लेनी चाहिये। अतः उस एक ही वर्तमान क्षण से संसार के समस्त पदार्थ परिणाम को प्राप्त होते हैं। और सभी धर्म उस एक ही क्षण में उपारूढ रहते हैं। अतः तथाकथित क्षण और उसके क्रम में संयम करने से उन क्षणों तथा क्रमों का साक्षात्कार होता है। फिर उनके साक्षात्कार के अनन्तर विवेकजन्य ज्ञान आविर्भूत होता है॥५२॥

सम्प्रति, तत्त्ववैशारदीकार पूर्वापर की संगति बैठाते हुए बृहद् अवतरणिका के साथ विवेकजज्ञानसिद्धिपरक सूत्र को अवतरित करते हुए उसकी व्याख्या करते हैं–

## तत्त्ववैशारदी

**उक्ता क्वचित्क्वचित्संयमात्सर्वज्ञता। सा च न निःशेषज्ञता, अपि तु प्रकारमात्रविवक्षया, यथा सर्वैर्व्यञ्जनैर्भुक्तमिति। अत्र हि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्तमिति गम्यते, न तु निःशेषैरिति। अस्ति च निःशेषवचनः सर्वशब्दः, यथा–उपनीतमन्नं सर्वमशितं प्राशकेन इति। तत्र हि निःशेषमिति गम्यते। तदिह निःशेषज्ञतालक्षणस्य विवेकजज्ञानस्य साधनं संयममाह– क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्। क्षणपदार्थं निदर्शनपूर्वकमाह–यथेति। लोष्ठस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोपकर्षपर्यन्तः परमाणु[1]र्यथा तथापकर्षपर्यन्तः कालः क्षणः, पूर्वापरभागविकलकालकलेति यावत्। तमेव क्षणं प्रकारान्तरेण दर्शयति–यावता वेति। परमाणुमात्रं देशम[2]तिक्रामेदित्यर्थः। क्रमपदार्थमाह–तत्प्रवाहेति। तत्पदेन क्षणः परामृश्यते। न चेदृशः क्रमो वास्तवः, किं तु काल्पनिकः, तस्य समाहाररूपस्यायुगपदु[3]पस्थितेषु वास्तवत्वेन विचारासहत्वादित्याह–क्षणतत्क्रमयोरिति। अयुगपद्भाविक्षणधर्मत्वात्क्रमस्य क्षणसमाहारस्यावास्तवत्वात्क्षणतत्क्रमयोरप्यवास्तवत्वं समाहारस्य। नैसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः प्रतिक्षणम् एव व्युत्थितदर्शना भ्रान्ता ये कालमीदृशं**

---

1. क घ च छ ज झ त थ द न–**यथा तथा**, ख–**तथा**, ग ध–**यथा यथा**।
2. क ख ग घ च छ झ त थ द ध न–**अतिक्रामेत्**, ज–**अतिक्रम्य**।
3. क ख ग घ च छ ज झ थ द ध न–**उपस्थितेषु**, त–**अवस्थितेषु**।

**वास्तवमभिमन्यन्त इति। तत्किं क्षणोऽप्यवास्तवः? नेत्याह—क्षणस्त्विति। क्षणस्तु वस्तुपतितो वास्तव इत्यर्थः। क्रमस्यावलम्बनमवलम्बः, सोऽस्यास्तीति, क्रमेणावलम्ब्यते वैकल्पिकेनेत्यर्थः। क्रमस्य क्षणावलम्बनत्वे हेतुमाह—क्रमश्चेति। क्रमस्यावास्तवत्वे हेतुमाह—न चेति। चो हेत्वर्थे। यस्तु [1]वैजात्यात्सहभावमुपेयात्तं प्रत्याह—क्रमश्च [2]न द्वयोरिति। कस्मादसंभव इत्यत आह—पूर्वस्मादिति। उपसंहरति—तस्मादिति। तत्किमिदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणाः? नेत्याह—ये त्विति। अन्विताः [3]साम्येन समन्वागता इत्यर्थः। उपसंहरति—तेनेति। वर्तमानस्यैवार्थक्रियासु स्वोचितासु सामर्थ्यादिति॥५२॥**

किसी-किसी पदार्थविषयक संयम से उत्पन्न होने वाली सर्वज्ञता को (पीछे) कहा गया है, किन्तु वह पूर्ण सर्वज्ञता नहीं है। वह तो सर्वज्ञता के प्रकार (भेद) मात्र बतलाने की इच्छा से कहा गया है। जैसे 'सभी व्यञ्जनों के साथ खाया'—यहाँ व्यञ्जन के जितने प्रकार हैं, उन सबके साथ खाया, यह वाक्य का तात्पर्य है अर्थात् 'परोसे गए सभी व्यञ्जन खाये', न कि 'सम्पूर्ण व्यञ्जनों को खाया' यह अर्थ निकलता है। '**सर्व**' शब्द निःशेषवाची होता है, जैसे—'**उपनीतमन्नं सर्वमशितं प्राशकेन**' में 'सर्व' शब्द निःशेष अर्थ में प्रयुक्त है। सम्प्रति, सूत्रकार निःशेषज्ञता (पूर्णज्ञातृत्व) रूप विवेकजज्ञान के साधनीभूत संयम का स्वरूप बतलाते हैं—'**क्षणेति**।' भाष्यकार '**क्षण**' पदार्थ को निदर्शनपूर्वक बतलाते हैं—'**यथेति**।' जिस प्रकार मिट्टी के ढेले का विभाग करते जाने पर जिस अवयव में अल्पत्व की पराकाष्ठा होती है अर्थात् जो सर्वाधिक सूक्ष्म अविभाज्य अंश होता है, उसे '**परमाणु**' कहते हैं। उसी प्रकार काल की चरम सूक्ष्मता को प्राप्त हुआ काल का अविभाज्य अंश (सर्वाधिक सूक्ष्म अंश) '**क्षण**' कहलाता है। अर्थात् पूर्वापर भाग से रहित काल की कला को '**क्षण**' कहते हैं। भाष्यकार क्षण को प्रकारान्तर से प्रदर्शित करते हैं—'**यावता वेति**।' यहाँ पूर्वदेश के अतिक्रमणपूर्वक उत्तरदेश के ग्रहण की देशावधि परमाणुमात्र है। अर्थात् पूर्वदेश के परमाणुमात्र परिमित स्थान को लांघकर उत्तरदेश में पहुँचने की कालावधि को '**क्षण**' कहते हैं। सम्प्रति, भाष्यकार '**क्रम**' पदार्थ को बतलाते हैं—'**तत्प्रवाहेति**।' भाष्य में प्रयुक्त '**तत्**' पद से '**क्षण**' का ग्रहण होता है। अर्थात् क्षणों की उत्तरोत्तर भावरूप से जो अवस्थिति है, उसे '**क्रम**' कहते हैं। इस प्रकार का क्रम वास्तविक नहीं है, अपितु काल्पनिक है, क्योंकि एक काल में एक साथ उपस्थित न होने वाले क्षणों में क्षण-समाहाररूप क्रम के वास्तविक होने का विचार ही सहनीय नहीं है तो फिर क्षण-

---

1. क—**वैमात्यात्**, ख ग घ च छ ज झ त थ—**वैयात्यात्**, द ध न—**वैजात्यात्**।
2. क ख ग घ च छ झ त थ द ध न—**न उपलभ्यते**, ज—**न नोपलभ्यते**।
3. क ख ग घ च छ ज झ न—**साम्येन**, त थ द ध—**सामान्येन**।

क्रम को वास्तविक मानने के सिद्धान्त का तो कहना ही क्या है, इसी तथ्य को लेकर भाष्यकार कहते हैं–'**क्षणतत्क्रमयोरिति**।' युगपत् उपस्थित न होना क्षणों का धर्म होने से तथा क्षणसमाहार के अवास्तविक होने से क्षण और उसके क्रम का समाहार (मुहूर्त, अहोरात्रादिरूप) भी अवास्तविक है। स्वाभाविंक तर्कपूर्ण बुद्धि-वैभव से रहित अर्थात् निरर्थक एवं दोषपूर्ण आलोचना करने वाले भ्रान्त व्यक्ति अवास्तविक (मुहूर्त, अहोरात्रादि) '**काल**' को वास्तविक मानते हैं।

**शङ्का**–तो क्या (मुहूर्तादिरूप कल्पितकाल की भाँति) '**क्षण**' भी अवास्तविक अर्थात् काल्पनिक है?

**समाधान**–उक्त शंका का निषेध करते हुए भाष्यकार कहते हैं–'**क्षणस्त्विति**।' क्षण '**वस्तुपतित**' अर्थात् वास्तविक है। (वह मुहूर्तादि काल की भाँति कल्पित नहीं है)। '**क्षण**' क्रम का अवलम्बन अर्थात् आश्रय है। अर्थात् क्षण वैकल्पिक क्रम से ठहरता है। '**क्रम**' क्षण के अधीन है। '**क्रम**' के क्षणाधीन होने में भाष्यकार हेतु उपन्यस्त करते हैं–'**क्रमश्चेति**।' '**क्रम**' क्षणों का पौर्वापर्य रूप है, अतः क्रम क्षणों के अधीन रहता है। भाष्यकार '**क्रम**' की अवास्तविकता में हेतु बतलाते हैं–'**न चेति**।' यहाँ '**च**' हेत्वर्थक है। पूर्वोत्तर के दोनों क्षण एक साथ नहीं रह सकते हैं, इसलिये '**क्रम**' अवास्तविक ही है। (भाव यह है कि पूर्वोत्तर क्षणों का आनन्तर्यरूप '**क्रम**' वस्तुभूत तभी माना जा सकता है जब वे दोनों क्षण एक साथ विद्यमान रहें। किन्तु वे एक साथ तो रहते नहीं हैं। अतः दो क्षणों की युगपत् स्थिति सम्भव न होने से क्षणाश्रित क्रम को काल्पनिक माना जाता है)। और जो लोग पूर्वोत्तर क्षणों की एक ही काल में हठपूर्वक स्थिति मानते हैं, उनके प्रति भाष्यकार का वक्तव्य है–'**क्रमश्च न द्वयोरिति**।' पूर्वोत्तर दोनों क्षणों का एक साथ रहना संभव न होने से उनका '**क्रम**' वास्तविक नहीं है। किस कारण से क्षणविशिष्ट क्रम की वास्तविकता असम्भव है, इस पर भाष्यकार बतलाते हैं–'**पूर्वस्मादिति**।' पहले वाले क्षण के बाद होने वाले भावी क्षण की जो निरन्तरता (आनन्तर्य) है, उसे ही '**क्रम**' कहा जाता है। (इस प्रकार क्षण-विशिष्ट क्रमव्यवहार किया जा सकता है)। भाष्यकार '**क्रम**' के स्वरूप को उपसंहृत करते हैं–'**तस्मादिति**।' अतः वर्तमानकालिक एक ही क्षण है। पूर्वोत्तर के क्षण नहीं होते हैं। इसलिये भूत और भावी क्षणों का सहभाव संभव नहीं होता है।

**शङ्का**–ऐसी स्थिति में क्या शशशृङ्ग के समान ही पूर्वोत्तर के क्षण तुच्छ हैं? अर्थात् शशशृङ्ग के अलीक होने के समान पूर्वपश्चाद्भावी क्षणों का भी मिथ्यात्व है?

**समाधान**–यह बात नहीं है, ऐसा भाष्यकार बतलाते हैं–'**ये त्विति**'। ये जो भूत तथा भावी क्षण हैं, वे साम्यपरिणामरूप से वर्तमान क्षण में अन्वित रहते हैं। अर्थात् भूत-भावी-क्षण शशविषाण की भाँति तुच्छ नहीं हैं, अपितु परिणामरूप से वर्तमान

